THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

EDITED

by

Dr. MANGAL DEVA SHASTRI,

M. A., D. Phil. ( OXON. )

*No.* 78

( Part I )

# THE

# TATTVA CHINTĀMANI

WITH

COMMENTARIES

Published by

The Superintendent, Printing and Stationery,

Government Press, Allahabad.

1939.

# तत्त्वचिन्तामणिः

( प्रत्यक्षखण्डस्य प्रथमं पुटम् )

श्रीमद्गङ्गेशोपाध्यायविरचितः

श्रीमन्महेशठक्कुरविरचितेन "आलोकदर्पणेन" श्रीमन्मधुसूदन-
विरचितेन "आलोककण्टकोद्धारेण" च सहितया पक्षधरमिश्रा-
परनामधेयजयदेवमिश्रविरचितया "आलोक" इति
प्रसिद्धया व्याख्यया; प्रगल्भमिश्रविरचितया
'प्रगल्भी' इति ख्यातया विवृत्या;
श्रीसूर्यनारायणशर्मशुक्लप्रणीतया
'मिताक्षरा' ख्यया टिप्पण्या
च समेतः

वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यापकेन
न्यायव्याकरणाचार्य मीमांसकशिरोमणि
सूर्यनारायणशर्मशुक्लेन
संपादितः ।

---

THE

# TATTVA CHINTĀMAṆI

( Pratyakṣa Khaṇḍam )

Part I

By

Gaṅgeśopādhyāya

Edited By

Pt. Suryanarayan Sharma Shukla,
Nyaya Vyakaranacharya, Mimansaka Shiromani,
Asstt. Prof. Govt. Sanskrit College, Benares.

श्रीविश्वेश्वरः शरणम् ।

# किञ्चिन्निवेदनम्-

अयं श्रीमन्मैथिलपण्डितगङ्गेशोपाध्यायनिर्मितस्तत्त्वचिन्तामणिनामामहानिबन्धो गङ्गायमुनयोरिव न्यायवैशेषिकदर्शनयोरैक्यमापादयन् क्वचित्क्वचित् सारस्वतपयः प्रवाहमिव मीमांसाशास्त्रीयमहानिबन्धेऽप्यप्रकाशितं मीमांसाशास्त्रीयं निगूढमभिसन्धिं निराकरणप्रसङ्गेन प्रकाशयन् निर्मलतया त्रिवेणीसाम्यमधिगच्छन् नव्यन्यायशास्त्रत्वेन व्यवह्रियमाणो न केवलं नैयायिकानां वैशेषिकाणामेव वोपजीव्योऽपि तु सर्वेषां दार्शनिकानामुपजीव्यतया मन्तुमर्हो यथार्थनामा मुद्रयित्वा प्रकाशमुपनीयते ।

यद्यप्ययं ग्रन्थो महामहोपाध्यायश्रीमत्तर्कवागीशमथुरानाथविरचितया टीकया सहितः पूर्वं कलिकातानगर्याः प्रकाशमुपगतस्तथापि तस्य साम्प्रतमनुपलभ्यमानतया तट्टीकाया वङ्गसम्प्रदायमनुसृत्य प्रवृत्ततया च पूर्वमप्रकाशिताभिर्मैथिलसम्प्रदायानुरोधिनीभिरतिप्राचीनाभिष्टीकाभिः सहितोऽयं प्रकाशनीय इति तार्किकाणामनुरोधमङ्गीकृत्य प्राच्यप्रतीच्योभयदर्शननिष्णातवाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्ष श्रीमङ्गलदेवशास्त्रि एम. ए. डाक्टर महोदयैराज्ञप्तेन मया एतत्सम्पादने प्रावर्तिषि ।

अत्र महेशठक्कुरप्रणीतेन आलोकदर्पणेन मधुसूदनमिश्रप्रणीतेनालोककण्टकोद्धारेण च सहितः श्रीमज्जयदेवापरनामधेयपक्षधरमिश्रप्रणीत आलोकः प्रगल्भमिश्रप्रणीता प्रगल्भी मूलाक्षरयोजनार्थं मया प्रणीता मिताक्षराख्या संक्षिप्ता टिप्पणी च सहैव मुद्रापिता प्रामाण्य-

वादप्रकरणस्य श्रीमद्गदाधरभट्टाचार्यप्रणीता मिश्रगादाधरीति प्रसिद्धा गादाधरी टीकापि संयोजिता ।

सर्वाण्यपि आदर्शपुस्तकानि सरस्वतीभवनपुस्तकालयस्थान्येव तेषां विवरणं ग्रन्थकर्तॄणां परिचयादिकं च सम्पूर्णग्रन्थमुद्रणानन्तरं निवेदयिष्यते इति ।

१ । १ । १९३९

भगवतामाश्रवस्य
सूर्यनारायणशर्मशुक्लस्य
ग० संस्कृतकालेज
काशी ।

# तत्त्वचिन्तामणिः

## प्रत्यक्षखण्डम् ।

गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
स्त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्म्माणि तनुते ।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥ १ ॥

प्रगल्भी ।

वाणीसंसेव्यमानं तमजमक्षयमव्ययम् ।
नारायणमनाथैकनाथं नत्वा सहस्रधा ॥ १ ॥
आचार्यश्रीप्रगल्भेन जाह्नवीगर्भसम्भुवा ।
पितुर्नरपतेर्व्याख्यां हृदि कृत्वा निरुच्यते ॥ २ ॥

यस्यार्द्धे गिरिजा मूर्ध्नि गङ्गा भाले विधोः कला
अङ्के कुमारगणपौ तं सदाशिवमाश्रये ॥
तर्कव्याकृतिपाण्डित्य-शालिने प्रतिभाजुषे ।
रामेश्वराय गुरवे पित्रे मम नमः सदा ॥

आलोकः ।

**वक्त्राणि पञ्च कुचयोः प्रतिबिम्बतानि**
**दृष्ट्वा दशाननसमागमनभ्रमेण ।**
**भूयोपि शैलपरिवृत्तिभयेन गाढ-**
**मालिङ्गितो गिरिजया गिरिशः पुनातु ॥ १ ॥**
**अधीत्य जयदेवेन हरिमिश्रात्पितृव्यतः ।**
**तत्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥ २ ॥**

न्यायव्याकरणाचार्यो मीमांसकशिरोमणिः ।
तर्कपञ्चाननः श्रीमान् सूर्यनारायणः सुधीः ॥
पूर्वाचार्यवचः— सारमाकृष्य प्रयतात्मना ।
मितैरेवाक्षरैर्व्याख्यां कुर्वे चिन्तामणेरहम् ॥
वादतोषितविश्वेशसाधुवादोपबृंहिताः ।
महर्षेरक्षपादस्य जयन्ति विमला गिरः ॥

प्रारिप्सितस्य तत्त्वचिन्तामणिग्रन्थस्य निर्विघ्नपरिसमाप्तये कृतं महादेव-नमस्कारात्मकं मङ्गलं शिष्यशिक्षायै निबध्नाति—**गुणातीत इति** । गुणातीतोऽपीत्यत्र अपिर्विरोधाभाससूचनाय गुणातीतोऽपीत्यस्य सर्वत्र सम्बन्धः, तथा हि तस्मै नमः तस्मै कस्मै इत्यपेक्षायामाह—यो गुणातीतो निर्गुणोऽपि ईशः अप्रतिहतेच्छः त्रिगुणसचिवः स्वनिष्ठज्ञानेच्छाकृतिसहकारेण कार्यमात्रकारणम् त्र्यक्षरमयः त्रयो ज्ञानेच्छाप्रयत्ना अक्षरा अविनाशिनः यत्र तन्मयः तदात्मकः । त्रिमूर्तिः ब्रह्मविष्णुशिवरूपशरीरत्रयवान् सन् सर्गस्थितिविलय-कर्माणि तनुते विस्तारानुकूलयत्नवान् । कृपापारावारः निरुपाधिपरदुःखप्रहा-

आलोकदर्पणः ।

शङ्करजगदम्बिकयोरङ्के पङ्केन खेलन्तम् ।
लम्बोदरमवलम्बे यं वेद न तत्त्वतो वेदः ॥ १ ॥
पुंसामार्त्तिभिदे कलानिधिकुलोत्तंसाय संसारभी-
विध्वंसाय मुनीन्द्रमानससरोहंसाय कंसारये ।
अङ्कालम्बितशिक्यमुज्ज्वलरुचि गुञ्जावतंसादिना
यं साशङ्कमुपागमत्कमलभूः कृष्णाय तुभ्यं नुमः ॥ २ ॥

आलोककण्टकोद्धारः ।

चलाचलाङ्गुलिव्यक्तवरवंशार्पिताधरम् ।
त्रिभङ्गिललिताकारमनाकारमुपास्महे ॥ १ ॥
संसारबन्धविच्छेददत्तबोधानुबन्धिनौ ।
यशोदयार्पितानन्दौ गोविन्दौ हृदि भावये ॥ २ ॥

णेच्छा कृपा तस्या असाधारणमधिकरणम् । त्रिजतां परमगतिः परमहितकर्ता, एकः अद्वितीयः । अत्र निर्गुणत्वस्य ईशादिपदोपस्थाप्यैरिच्छादिभिर्विरोधः गुणपदस्य सांख्याभिमतसत्त्वरजस्तमोलक्षणगुणपरत्वेन विरोधपरिहारः । न च न्यायनये सत्त्वादीनां गुणानामसत्त्वात्प्रतियोग्यप्रसिद्ध्या गुणातीतपदेन कथं गुणाभावो बोधयितुं शक्य इतिवाच्यम् न्यायनये सृष्टिस्थितिप्रलयोत्पादका अदृष्टविशेषाः सत्त्वादिपदेन गृह्यन्त इत्यदोषात् तस्मै किं भूताय इत्यपेक्षायामाह—कस्मैचित् विशिष्यानिर्वचनीयगुणाय पुनः किं भूताय अमितमहिम्ने महिमा सौन्दर्यकरुणादयः पुनः किं भूताय पुरभिदे पुरत्रयभेदनकर्त्रे अनेन पुरत्रयभेदनसमर्थस्य विघ्ननिवारणक्षमत्वं सूचितम् ॥ १ ॥

आलोकदर्पणः ।

चतुर्भिरास्यैश्चतुरोऽपि वेदानुच्चारयन्नक्रमतो विरञ्चिः ।
पाठाग्रपश्चात्त्वविशेषमोषसंतोषिशिष्यः शिवमातनोतु ॥ ३ ॥

धत्ते नावनतिं महीधरसुताभागावरुद्धं शिरो
नैवोदञ्चति चारुसान्त्वनवचो मूकायितेऽर्द्धमुखे ।
आश्लेषोऽपि यथोचितं न हि भवत्येकाकिना बाहुना
मामव्यादिति विक्लवः प्रियतमामानापनोदे शिवः ॥ ४ ॥

धनाय पद्मां भविकाय दुर्गां गृहाय गौरीमितरे श्रयन्तु ।
अहं महानन्दपदस्य धात्रीं विद्याविधात्रीं गिरमाश्रितोऽस्मि ॥ ५ ॥

गौर्या गिरीशादिव कार्त्तिकेयो यो धीरया चन्द्रपतेरलम्भि ।
आलोकमुद्दीपयितुं नवीनं स दर्पणं व्यातनुते महेशः ॥ ६ ॥

अत्र श्लोकानां व्याख्या टीकाकृता सुगमत्वादुपेक्षिता सा त्वेवं प्रारिप्सितप्रतिबन्धकविघ्नविघातकं पुरभिन्नमस्काररूपं मङ्गलं शिष्यशिक्षायै निबध्नाति—गुणेति । सत्त्वरजस्तमोरूपान् गुणानतीतो गुणातीतः । यद्यपि नैयायिकमते सत्त्वादयो गुणाः सांख्यादेरिव नातिरिक्तास्तथापि स्थित्यादिसर्गादिसंहारादिकार्यानुगुणास्मदाद्यदृष्टविशेषा एव सत्त्वरजस्तमांसि इति ध्येयम्। ईशोऽप्रतिहतेच्छः, त्रिगुणसचिवः ज्ञानेच्छाप्रयत्नरूपगुणत्रयवान् । अक्षरमयः-अकारोकारमकारात्मकप्रणववाच्यः वाच्यतायां मयट् त्रिमूर्त्तिर्ब्रह्मविष्णुरुद्रात्मकशरीरत्रयवान् । सृष्टिस्थितिविलयरूपाणि कर्माणि-कार्याणि यस्तनुते विस्तारयति, पुनः पुनः करोतीत्यर्थः । कर्मपदोपादानं कार्यत्वपुरस्कारेण सृष्ट्यादिभिरीश्वरानुमानं सूचयितुम् । ईश्वर एव ब्रह्मविष्णुरुद्रशरीराणि गृह्णातीति मतेनेदम् । कृपेति निरुपधिपरदुःखप्रहाणेच्छाया अतिशयिताश्रय इत्यर्थः । त्रिजगतां त्रिजगद्वर्त्तिप्राणिनां परमगतिः परमहितकर्त्ता । एकः—स्वसमानजातीयद्वितीयरहितः । पुरभिदे पुरनामकदैत्यभेदनकर्त्रे । अनेन विघ्नवारणक्षमत्वं सूचितम् । कस्मै

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम्।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥ २॥

आलोकदर्पणः ।

चिद्विशिष्याशक्यनिर्वचनीयमहिम्ने । अत्र हेतुरमितमहिम्ने । अपि-शब्दोऽत्रगुणातीतविशेषणेन सहान्येषां विशेषणानां विरोधाभाससू-चनाय । तत्र विरोधस्याभासत्वं व्याख्यातरीत्या । विरोधभानं तु सर्वत्र गुणपदस्य वैशेषिकसिद्धगुणसामान्यपरत्वे, ईशत्रिगुणसचि-वविशेषणयोर्यथाऽव्याख्याततयाः, मयटः समवायपरत्वे, मूर्त्तिपदस्या-वच्छिन्नपरिमाणपरत्वे, बहुव्रीहिलभ्यशरीरसंयोगपरत्वे वा, तनुत इत्यत्राख्यातार्थे, कृपेत्यत्र यथोक्तार्थे, परमेत्यत्र यथोक्तार्थ एव, एकपदस्य संख्यापरत्वे सर्वत्र चैकवचनेन एकत्वसंख्यालाभे पुरभिद इत्यत्र यथाऽव्याख्यातकृतिरूपार्थे कस्मैचिद् अमितमहिम्ने इत्यनयोर्म-हत्त्वाख्यगुणपरत्वे इति ॥ १ ॥

निजकीर्त्यनुवृत्तये स्वनाम ग्रन्थनाम च प्रदर्शयन् प्रेक्षाव-त्प्रवृत्त्यर्थमितरग्रन्थापेक्षया स्वग्रन्थस्य प्रकर्षमाह— अन्वीक्षेति । अत्रोभयशास्त्रसाराभिज्ञकृतत्वं दुर्बोधतरन्यायशास्त्रसिद्धान्तोपदेश-गुरुकृतत्वं संक्षिप्तत्वं च प्रकर्षः ॥ २ ॥

प्रेक्षावत्प्रवृत्तये स्वीयग्रन्थस्योत्कर्षं प्रदर्शयन् स्वकीर्त्यनुवृत्तये स्वनाम ग्रन्थनाम च निर्दिशति—**अन्वीक्षेति** । दोषगणेन दोषसमूहेन दुर्गमतरे अत्यन्तदुर्गमे तन्त्रे सूत्रादौ सिद्धान्तदीक्षागुरुः सिद्धान्तोपदेश-गुरुः गङ्गेशः श्रवणादनु ईक्षा मननं अन्वीक्षा तस्या नयस्तमन्वीक्षानयं

**यतो मणेः पण्डितमण्डनक्रिया**
**प्रचण्डपाषण्डतमस्तिरस्क्रिया ॥**
**विपक्षपक्षे न विचारचातुरी**
**न च स्वसिद्धान्तवचोदरिद्रता ॥ ३ ॥**

आलोकदर्पणः ।

मणिनामधारणोपयोगिमणिसारूप्यमाह—यत इति ॥ ३ ॥

न्यायशास्त्रं गुरुभिः आकलय्य पुनः पुनर्निश्चित्य गुरूणां प्रभाकराणां मतं गुरुभिर्ज्ञात्वा चिन्तादिव्यविलोचनेन चिन्तारूपदिव्यचक्षुषा तयोः न्यायगुरुमतयोः अखिलं निःशेषं सारम् अभिप्रायं विलोक्य च मितेन वचसा श्रीतत्त्वचिन्तामणिं तनुते इत्यन्वयः ॥ २ ॥

ग्रन्थस्य चिन्तामणिनामकरणे हेतुं मणिसादृश्यमाह—**यत इति** । इदं सर्वत्र संबध्यते प्रचण्डेति । प्रचण्डाः पाषण्डाः बौद्धादयः एव तमांसि तेषां तिरस्क्रिया, मणिपक्षे प्रचण्डपाषण्डीभूतानि यानि तमांसि तेषां तिरस्क्रियेति बोध्यम् । विपक्षाः बौद्धादयः तेषां यः पक्षः सिद्धान्तस्तत्र न विचारचातुरी न व्यवस्थापनकौशलम्, मणिपक्षे विपक्षपक्षे चौरादिपक्षे न विलक्षणचरणचातुरी मणिप्रभया तमसो निवृत्तेः । स्वस्य न्यायदर्शनस्य यानि सिद्धान्तवचांसि तेषां दरिद्रता न, मणिपक्षे स्वस्य धनस्य सिद्धः अन्तः अवसानं वृत्तमिति वचसोऽदरिद्रता न किन्तु दरिद्रता प्रयोगाभाव इति यावत् अदरिद्रतेत्यत्रा-कारप्रश्लेषात् ॥ ३ ॥

**इह खलु सकलशिष्टैकवाक्यतया अभिमतकर्म्मा-रम्भसमये तत्समाप्तिकामा मङ्गलमाचरन्ति । तत्र यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्या विनापि**

---

स्वकृतस्य मङ्गलस्य नैष्फल्याशङ्कया 'न कुर्यान्निष्फलं कर्म' इति निषेधविषयता माभूदिति मङ्गलस्य सफलत्वं व्यवस्थापितुकामः प्रथमं मीमांसकसंप्रदायमाह—इहेत्यादिना **संप्रदायविद** इत्यन्तेन । 'इह' अस्मिँल्लोके, 'खलु' अवश्यं, 'सकलशिष्टैकवाक्यतया' सकलशिष्टसंमत्या, वाक्यनिष्ठो धर्मविशेषस्तु नात्रैकवाक्यता पुंस्यसंभवात् ।

'आरम्भसमये' आरम्भपूर्वकाले अधिकरणसप्तमी । नन्वत्र आरम्भ इत्येवोच्यतां 'विवाहे नन्दीमुखं कुर्यात्' इत्यत्रेव सतीत्यध्याहृत्य 'यस्य च भावेन भावलक्षणम्' इति सप्तमीसिद्धौ अधिकरणत्वोपपत्त्यर्थं समयशब्दप्रयोगो निरर्थकः अत एव 'ग्रन्थारम्भे विघ्नविघाताय' इत्येव बहूनां शिष्टानां प्रयोग-इति चेन्न—मानान्तरासिद्धस्यार्थस्य यत्र कालविशेषज्ञापनाय प्रयोगस्तत्रैव 'यस्य च भावेन' इति सप्तम्या महाभाष्यस्वरससिद्धतया नान्दीश्राद्धस्य मानान्तरासिद्धत्वाभावेन तत्र अधिकरणसप्तम्या एव वाच्यतया विवाहपदस्य विवाहप्राक्काले लक्षणाया अवश्याश्रणीयतया शक्त्या बोधजननाय समयशब्दप्रयोगस्यौचित्यात् । 'राहूपरागे स्नायात्' इत्यत्रापि राहूपरागपदस्य राहूपरागाश्रयकाललक्षणयाधिकरणसप्तम्येवेति ध्येयम् ।

ननु मङ्गले समाप्तिहेतुत्वं न प्रत्यक्षम् प्रमत्तानुष्ठितसमाप्तिस्थले ऐहिकमङ्गलाभावनिश्चयवता लोकावगतकारणादेव समाप्तिसिद्धौ मङ्गलेऽन्यथासिद्धत्वग्रहवता च पुंसा तदा व्यतिरेकव्यभिचारस्य ग्रहेण मङ्गले समाप्तिहेतुतायाः प्रत्यक्षेणाध्यवसातुमशक्यत्वात् अत एव नानुमानाद्यपि इत्यत

**मङ्गलं प्रमत्तानुष्ठितसमाप्तेः, न च तत्र जन्मान्तरीय तत्कल्पनम् अन्योन्याश्रयात् लोकावगतकारणेनान्यथा-सिद्धेश्च ।**

---

आह—**तत्र यद्यपीति** । 'तत्र' आचारे' प्रयोजकत्वं सप्तम्यर्थः अस्य चान्वयः कारणतायाम् तथा च शिष्टाचारप्रयोजिका समाप्तिकारणता यद्यपि तादृशपुरुषविशेषेण तादृशकालविशेषे मङ्गलस्य नान्वयव्यतिरेकगम्येत्यन्वयः । अत्र हेतुमाह—**विनापीति** । मङ्गलं न समाप्त्यन्वयव्यतिरेकज्ञानजन्य-तत्कालीनतत्पुरुषीयसमाप्तिकारणत्वप्रकारकप्रत्यक्षनिश्चयविषयः तत्कालीनत-त्पुरुषीयसमाप्तिव्यभिचारित्वग्रहविषयत्वादिति अनुमानं फलितम् ।

नन्वयं हेतुरसिद्धः तेन पुंसा तदानीं प्रमत्तानुष्ठितसमाप्तौ ऐहिकमङ्गल-व्यभिचारित्वग्रहेऽपि मङ्गलसामान्यव्यभिचारित्वग्रहासम्भवात् इति तस्य पुंसः तदानीं जन्मान्तरीयमङ्गलानुमितेः संभवादित्यभिप्रायेण शङ्कते—**न च तत्रेति**। 'तत्र' प्रमत्तानुष्ठितसमाप्तिस्थले.'तत्कल्पनम्' इयं समाप्तिर्मङ्गलपूर्विका समाप्तित्वात् शिष्टानुष्ठितसमाप्तिवत् इत्यनुमानेन जन्मान्तरीयमङ्गलानुमानम् ।

**'अन्योन्याश्रयात्'** इति । जन्मान्तरीयमङ्गलसिद्धौ व्यभिचारज्ञाना-भावेन हेतुताग्रहः हेतुताग्रहे च समाप्तिरूपहेतुना जन्मन्तरीयमङ्गलानुमानमि-त्यन्योन्याश्रय इति भावः ।

ननु तर्कस्य व्याप्तिग्रहे न हेतुत्वं किन्तु क्वचिद्व्यभिचारशङ्काविधूनन-द्वारा उपयोगः तथा च व्यभिचारग्रहसामान्यभावदशायां समाप्तित्वे मङ्गल-पूर्वकत्वव्यभिचारज्ञानाभावादेव जन्मान्तरीयमङ्गलानुमानमित्यरुचेर्हेत्वन्तरमाह—**लोकेति** । लोकावगतकारणेन—कण्ठताल्वाद्यभिघातादिना 'अन्यथासिद्धेः' तस्य पुरुषस्य तदानीं मङ्गले समाप्तिं प्रति अन्यथासिद्धत्वज्ञानादित्यर्थः ।

प्रगल्भी ।

चिन्तामणिकारः स्वकृतस्य नमस्कारादेः शिष्यशिक्षार्थं निबद्धस्य व्यभिचारेण कारणत्वाभावेन वैफल्यं माभूदित्युपोद्घात संगत्या तत्कारणत्वं व्यवस्थापयितुं भूमिकामाचरति—इहेति। इह—विघ्नज्ञानवच्छिष्टकार्ये जगति वा । खलु—वाक्यालंकारे ।

एकवाक्यतयेति । यद्यप्येकवाक्यता वाक्यनिष्ठो धर्मः न पुंनिष्ठस्तथाप्येकस्मिन्नर्थे वाक्यं संमतिरूपं येषां त एकवाक्यास्तद्भाव एकवाक्यता एकसंमतिरूपेत्यर्थः । आरम्भसमय इति । यद्यप्येतन्मते जन्मान्तरीयं मङ्गलं न प्रकृतारम्भसमये कृतं तथाप्यारम्भसमय इत्यनेनारम्भपूर्वकाल इत्युक्तम ।

नमस्कारादिकमभीष्टसाधनं न वा तदनुकूलं नवेति चेति विप्रतिपत्तौ पूर्वपक्षमाह—तत्र यद्यपीति । तत्र—अभिमतसमाप्तौ ।

नान्वयव्यतिरेकगम्या—नान्वयव्यतिरेकसहचारज्ञानगम्येत्यर्थः । ननु कार्यं प्रति व्यापकताविशेष एव कारणता सा चान्यथा सिद्धत्वविरहिततया ज्ञायमानकारणे कार्यकारणव्यभिचारादर्शन सहकृतेन तद्गततत्सहचारदर्शनेनैव निश्चीयते न च तत्र व्यतिरेक सहचारज्ञानापेक्षा मानाभावात तत्सत्त्वे एतन्निश्चयविलम्बेन तन्निश्चये विलम्बाभावात् तथा चात्र व्यतिरेकोपादानमसङ्गतमितिचेत् न व्यापकताग्रहे हि व्याप्यगतव्यभिचारदर्शनं प्रतिबन्धकम् तच्च निश्चयरूपं संशयरूपं वा कारणता च कार्यं प्रति व्यापकताविशेष एव तथा च यत्र कारणाभावदर्शनं तत्र कार्यसत्त्वसंशयो व्यभिचारसंशयत्वेन तद्ग्रहे प्रतिबन्धक इति तन्निवृत्त्यर्थं तत्र

प्रगल्भी ।

कार्याभावज्ञानमनुसरणीयम् एतदेव व्यतिरेकसहचारज्ञानं कारणताग्रहे प्रतिबन्धकनिवृत्तिद्वारा परम्परया तत्प्रयोजकमिति व्यतिरेकोपादानमेवमन्यत्रापीति वदन्ति ।

तच्चिन्त्यते—व्याप्तिप्रत्यक्षमात्रे व्यापकताप्रत्यक्षमात्रे च एकरूपाक्रान्तसाध्यसाधनप्रतियोगिकसहचारनिश्चयत्वेनोत्सर्गतः कारणत्वात् अत एवाग्रे व्यतिरेकिग्रन्थे व्यतिरेकसहचारज्ञानस्यान्वयव्याप्तिग्रहे चिन्तामणिकारः कारणतां वक्ष्यति। अत एव प्रमेयतत्त्वबोधे वर्द्धमानचरणैरुक्तम् 'यत्रोभयसहचारज्ञानेन व्याप्तिर्गृह्यते तदन्वयव्यतिरेकि' इति। न च विपक्षसम्भवेऽपि तु तत्रापि हेतुवृत्तिशङ्कानिराकरणाय व्यतिरेकिग्रहणमुपासनीयमिति टीकाकारवचनविरोध इति वाच्यम्। एकस्योभयार्थत्वे दोषाभावात्। अत एवान्वयसहचारधीरपि क्वचिच्छङ्कानिरासिका सती व्याप्तिनिश्चायिका ।

विनापीति। अयमर्थः—व्यभिचारज्ञानविरहसहकृतसहचारदर्शनस्य कारणताप्रत्यक्षं प्रति हेतुत्वात्। प्रकृते व्यभिचारज्ञानसत्त्वान्नोभयसहचारज्ञानमपि कारणतानिश्चायकमिति ।

अन्योन्याश्रयादिति। प्रमत्तानुष्ठितसमाप्तिस्थले जन्मान्तरीयतत्कल्पनया व्यभिचारज्ञानाभावे सति सहचारदर्शनेन तत्कारणत्वग्रहः। तस्मिन्सति तत्र जन्मान्तरीयं तत्कल्पनीयमित्यन्योन्याश्रयादित्यर्थः ।

ननु प्रमत्तानुष्ठितस्थलादावेकस्यैव मङ्गलस्याभावनिश्चयो न जन्मान्तरीयस्यापि, तथा च न तत्र व्यभिचारनिश्चयः किन्तु

तत्संशयः तस्य च मङ्गलासमवहिताजन्यसमाप्तिरूपकार्यस्य मङ्गलसमवहितसामग्रीजन्यत्वं विना जन्यत्वाभावप्रसङ्गरूपेण तर्केण निवृत्तौ प्रकृते कारणत्वग्रहो निष्प्रत्यूह एव, अन्यथा व्यभिचार-संशयस्य तर्केणानिवर्त्तने तस्मिन् सति क्वचिदपि कारणताग्रहो न न स्यादित्यत आह– लोकावगतेति । तच्चिन्त्यम् । प्रमत्तानुष्ठि-तसमाप्तिस्थले व्यभिचारसंशयस्य सत्त्वेऽपि समाप्तिरूपकार्ये मङ्गला-समवहिताजन्यत्वरूपविशेषणभागस्य निश्चयासम्भवेन उक्ततर्कान-वतारात् । ईश्वरकृतवेदसमाप्तौ व्यभिचारनिश्चयाच्च समाप्तौ मङ्गलस्य न कारणत्वग्रहः । न च विघ्नध्वंसजन्यसमाप्तौ तस्य कारणता तादृशसमाप्तेः प्रत्यक्षेणाज्ञानात् ।

ननु समाप्तिविशेषे मङ्गलस्य कारणत्वमस्तु अत आह– लोकेति । मङ्गलं विनैव लोकावगतकारणचक्रादेव प्रमत्तादिसमा-प्तिस्थले क्लृप्तसमाप्तेरुपपत्तेर्न तस्य कारणतेत्यर्थः ।

आलोकः

प्रसङ्गान्मङ्गलस्य समाप्तिहेतुतां व्यवस्थापयितुं भूमि-मारचयति इहेति । इह-लोके । खलु-वाक्यालंकारे ।

आलोकदर्पणः

प्रसङ्गादिति– स्मृतस्योपेक्षानर्हत्वादित्यर्थः । केचिदिहोपो-द्घातः सङ्गतिः निष्फलस्योक्त्यसम्भवेनोक्तसिद्ध्यर्थत्वादेतच्चिन्ताया इत्याहुः । भूमिमिति– कर्त्तव्यविचारोपयोगिनमर्थं दर्शयतीत्यर्थः ।

आलोककण्टकोद्धारः ।

मधुसूदनसद्युक्तिसमुत्सारितकण्टकाः ।
आलोकव्यक्तमार्गेण मणिं गृह्णन्तु पण्डिताः ॥ ३ ॥

यस्तर्के जैमिनीये फणिपतिभणितौ ब्रह्मविद्याविचारे
काणादे काव्यशास्त्रे पटुविशदमतिर्धर्मतन्त्रेऽथ मन्त्रे ॥
दुष्प्रापं प्राप तीव्रं गुरुपरिचरणक्लेशमस्याखिलस्य
प्रेक्षन्तां पुण्यभाजः फलततिमुदितामत्र सन्तः कियन्तः॥ ४ ॥

मङ्गलफलनिरूपणस्य प्रमाणतत्त्वविवेकेनासङ्गतिं व्युदस्यति–प्रसङ्गादिति । प्रवर्तकज्ञानगोचरस्य मङ्गलस्य सफलत्वव्यवस्थापनमन्तरेण निष्फलकर्तुः प्रमत्तत्वशङ्कया तत्कर्तृकग्रन्थे प्रेक्षावतामप्रवृत्त्यापत्त्या व्यभिचारे स्फुरति शिष्याणां समाप्तिकामाचारविषयत्वलिङ्गेन तत्साधनताज्ञानानुपपत्तेः तदर्थकमङ्गलोपनिबन्धनानर्थक्यापत्त्या चोपेक्षानर्हत्वादित्यर्थः ।

वस्तुतस्तु आयुर्वेदादिदृष्टान्तेनाप्तोक्तत्वेनादृष्टार्थानां वेदानां प्रामाण्यं साधनीयं तथा च मङ्गलसमाप्त्योर्व्यभिचारे तद्बोधकागमस्यानाप्तोक्तत्वशङ्कायामेककर्तृकत्वादन्यत्रापि सा स्यादित्युपेक्षानर्हत्वम् । अत एव प्रमाणतत्त्वविवेकपरत्वेनान्तर्भावलक्षणसङ्गतिसत्त्वान्नैतत्प्रकरणस्य ग्रन्थबहिर्भाव इत्याकलनीयम् तथा चैतद्विचारावतारबीजप्रदर्शनपरमिदम् न तु षड्विधसंगतिमध्यपठितः प्रसंगः प्रकृतग्रन्थार्थः संगतिप्रतियोगिपूर्ववाक्याभावात्, न च गङ्गेश इत्यादिप्रतिज्ञावाक्यं तथा, तस्याग्रिमप्रतिज्ञापौनरुक्त्यभिया श्लोकान्तरवत् ग्रन्थबहिर्भावात् अन्तर्भावेपि तद्वाक्येन मङ्गलास्मरणात् प्रकारान्तरीयस्मरणस्य संगतिलक्षणाभावादिति प्रकृतमङ्गलस्य व्यभिचारेणाफलत्वापत्त्योपोद्घातः संगतिरिति कश्चित् । तन्न मङ्गलस्य ग्रन्थानर्थत्वेन तेन समं संगत्यनपेक्षणात् पूर्वोत्तरवाक्यार्थ-

आलोकः ।

एकवाक्यता—अविप्रतिपत्तिः । अतो भ्रममूलकताशङ्का निराकृता । विवादाङ्गसंशयबीजविप्रतिपत्त्यदर्शनात् न्यूनता च परिहृता तत्त्वनिर्णिनीषुविचारतयाऽन्यहेतुकसंशयस्यापि भावात् ॥ तदुक्तम्-'अन्यत्र सर्वहेतुक' इति ॥

आलोकदर्पणः ।

एकमेकजातीयं वाक्यं येषां ते एकवाक्या—अविप्रतिपत्तिमन्तः पुरुषास्तेषां भाव एकवाक्यतेत्यभिप्रेत्याह—एकेति । अन्यत्र वादे सर्वहेतुकः साधारणधर्मदर्शनादिहेतुकस्त्रिविधोऽपीत्यर्थः ।

आलोककण्टकोद्धारः ।

योरुपपाद्योपपादकभावस्योपोद्घातरूपत्वाच्चेति । हेतुताम्—प्रयोजकत्वम् । भूमिमिति । समस्तप्रकरणमूलीभूतसदाचारविषयतारूपां विचारयोग्यतां प्रदर्शयतीत्यर्थः । वाक्यालंकार इति । निमित्तसप्तम्यानर्थक एवायं वाक्यशोभाकर इत्यर्थः । अन्येति । साधारणासाधारणधर्मदर्शनेत्यर्थः । समाप्तिकामकर्तव्यत्वादि चात्र तादृशो धर्मः । अन्यत्र—विजिगीषुविचारात् । अर्थानुवादश्चायं तत्र विचार इत्यनन्तरं पुनस्तत्रेति पाठे प्रथमं तत्र पदं व्याख्येयानुवादः । तच्च यद्यपि समाप्त्यर्थतया प्राचीनैर्व्याख्यातं युक्तं च तत् अन्यथा कार्यवाचिपदाध्याहारगौरवात् तथाप्येवं समाप्तिनिरूपितमङ्गलकारणतायाः पक्षत्वप्राप्त्याऽऽश्रयासिद्धिः स्यात् न च कारणतायां सिद्धायामपि तत्साधकप्रमाणपरिच्छेदार्थमयमारम्भ इति नाश्रयासिद्धिः । 'विनापि' इत्यादिना प्राग्भाव-

आलोकः।

तत्र-विचारे।(तत्र) प्रथमोद्दिष्टत्वेन पुरःस्फूर्तिकतया प्रथमं प्रत्यक्षप्रमाणमाशङ्क्य निषेधति-नान्वयेति। नान्वयव्यतिरेकसहचारज्ञानसचिवाध्यक्षगम्येत्यर्थः। अत्र यद्यपि कारणताशरीरप्रविष्टव्याप्ते

आलोकदर्पणः।

नान्वयेत्यादिसाध्ये विनापीति हेतुर्न संगच्छते व्यभिचारादर्शिनः कारणताग्रहसम्भवादित्यत आह-अत्र विचार इति। तथा च विचारे सति यदन्वयव्यतिरेकगम्यत्वं प्रमाविषयत्वरूपं तन्निषेधस्य विवक्षितत्वात् नोक्तदोष इति भावः। यद्वा विप्रतिपत्तिजसंशयानावश्यकत्वेऽपि संशयावश्यकत्वादाह— तत्रेति-विचारे संशये। सति सप्तमीयम्। तत्राचारे इति पाठः निमित्तसप्तमी चेयमित्यन्ये।

आलोककण्टकोद्धारः।

प्रदर्शनविरोधात्, तेन हि धर्म्येव खण्डितः। प्रकृते तु समाप्तिर्नान्वयव्यतिरेकगम्यमङ्गलकारणताकेत्यर्थपर्यवसानान्न दोषः। न च मङ्गलनिष्ठकारणता समाप्तिप्रतियोगित्वेन समाप्तिप्रतियोगिककारणता वा मङ्गलनिष्ठत्वेन नान्वयादिगम्येति वाक्यार्थः सप्तम्याः प्रतियोगित्वार्थत्वकल्पनात्, प्रथमे सप्तम्यन्तस्य व्यवहितनञन्वयकल्पनाच्च सर्वनाम्नश्च विश्वशक्ततया न तदर्थकल्पने कोपि दोष इत्याशयः। वस्तुतो विनापीत्यादिग्रन्थो न वस्त्वभावपरोपि तु तद्ग्रहपर इति पूर्वव्याख्यानमप्यदोषम्। अन्वयव्यतिरेकयोरहेतुत्वात्तद्ज्ञानस्याप्रमाणत्वाच्चाप्रसक्तप्रतिषेधमाशङ्क्याह- नान्वयेति। आवश्यकीति। व्यतिरेकसहचारसाहित्येनैवान्वयसहचारस्यान्वयव्याप्तिग्राहकत्वे धूमादीनां दशाविशेषे केवलान्वयित्वं न स्यात्। सामान्यसामग्री-

आलोकः ।

रन्वयव्याप्तितया न व्यतिरेकसहचारापेक्षावश्यकी तथापि सति व्यतिरेके हेतोस्तत्र सत्त्वशङ्कया व्यभिचारशङ्काग्रस्ततयाऽन्वयोऽप्यकिञ्चित्कर इति तच्छङ्कानिवृत्त्यर्थं व्यतिरेकापेक्षाप्यस्तीति द्वयम-

आलोकदर्पणः ।

तत्र–अभिमतकर्मसमाप्तावितिमूलार्थं इति केचित् । तत्रेत्यनन्तरं कार्यस्येति शेषः तथाच व्यतिरेकसहाचारज्ञानस्य साक्षादजनकत्वेऽपि व्यभिचारशङ्कानिराकरणद्वारोपयोगित्वमस्त्येव । यद्यपि व्यतिरेकसहचारज्ञाने सत्यपि क्वचिद्व्यभिचारशङ्का तिष्ठत्येव तथापि यत्किञ्चिदधिकरणीयप्रतिबन्धकशङ्कानिराकरणे प्युपयोगित्वसिद्धिरिति भावः । नियतव्यतिरेकसहचारो वा विवक्षितः । तथा च तेन सार्वत्रिक्यपि व्यभिचारशङ्का वार्यत एवेति भावः ।

आलोककण्टकोद्धारः ।

वोपपत्तौ कारणताघटकव्याप्तिग्रहे विशेषसामग्र्यकल्पनादिति भावः । सति व्यतिरेक इत्यत्र व्यापकस्येति शेषः । यद्वा सत्त्वशङ्कयेत्यत्र कार्यस्येति शेषः । विपक्षसम्भवे तत्रापि हेतुवृत्तिशङ्कानिराकरणाय व्यतिरेकग्रहणमुपासनीयमिति प्रमाणटीकासम्वादादिति भावः । यद्यपि व्यतिरेकसहचारज्ञानमात्रं नाधिकरणान्तरं शङ्काविरोधि नियमगर्भस्तु प्राक् न प्रत्येतुं शक्यः तर्कापेक्षणे तु किं व्यतिरेकेण तथापि क्वचिद् व्यभिचार इत्याशङ्का न विरोधिनी व्यवहारमात्रविरोधापतेः किन्तु व्यापकभाववत्तया निश्चितेऽधिकरणविशेषे व्याप्यसन्देहो विरोधी वाच्यः । तत्र च तत्तदधिकरणे व्याप्याभावनिश्चयः प्रतिबन्धक एवेति भावः ।

आलोकः ।

प्युपात्तम् । वस्तुतो नान्वयगम्या न व्यतिरेकगम्येति साध्यद्वयम् । न च हेतोर्द्वितीयमात्रीयतया प्रथमसाध्ये हेत्वलाभः । न हि वयं

आलोकदर्पणः ।

नन्वेवं तुल्यकक्षत्वेनोभयोपादानमसङ्गतमित्यनुशयादाह—वस्तुत इति । न अन्वयगम्या, नान्वयसहचारज्ञानसहकृतप्रत्यक्षगम्या, न व्यतिरेकगम्या, न व्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षगम्येति मूलमेवं व्याख्येयम् । व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनोभयोस्तुल्यवदन्वयव्याप्तिग्राहकत्वस्य वक्ष्यमाणत्वादिति भावः ।

आलोककण्टकोद्धारः ।

ननु असाधारणसहकारिमात्रस्य प्रकृते निषेध्यत्वादन्यथाऽतिप्रसङ्गान्नैतद्युक्तमत आह वस्तुत इति । साधारणरूपेण द्वयोस्तुल्यवद्धेतुत्वं व्युत्पादयिष्यत इति भावः । इदं तु द्वयोस्तुल्यप्राधान्यसूचनार्थम् वस्तुतो येन रूपेण तयोः कारणता तद्रूपावच्छिन्नग्राह्यत्वाभावसाधनमप्यदोषम् व्यतिरेकसहचारगर्भकारणताभिप्रायेण तदुपादानमित्यप्याहुः । नियमांशग्रहे व्यतिरेकानुपयोगेऽप्यनन्यथासिद्धत्वांशग्रहे तदुपयोगोऽस्त्येव स्वेतरसत्त्वे स्वव्यतिरेकात् कार्यव्यतिरेकस्य तद्ग्राहकत्वात्, अत एवाकरे वक्ष्यति, रासभादिव्यावृत्तेन नियतान्वयेनान्वयव्यतिरेकाभ्यां वा तृणादीनां हेतुताग्रह इति । तथा चेतरेषामन्वये सति यः स्वव्यतिरेकस्तद्ग्राह्या नेति मूलं व्याख्येयमित्यन्ये । अनन्यथासिद्धेत्यादि न कारणत्वम् अतीन्द्रियानेकघटिततया प्रत्यक्षग्राह्यत्वशङ्कानापत्तेः किंतु स्वरूपसम्बन्धभेदस्तत्र च नियतान्वयव्यतिरेकौ ग्राहकाविति अपरे । वस्तुतो व्यतिरेकपदं व्यभिचारज्ञानव्यतिरेकपरमिति न कापि शङ्का ।

आलोकः ।

विनापि मङ्गलमित्यादिना ग्राहकाभावमाचक्ष्महे येनैकतरसाध्यमात्रविषता हेतोः किंतु यदा समाप्तिस्तत्पूर्वं मङ्गलमित्येवंरूपव्याप्तिघटितकारणत्वरूपग्राह्याभावग्रहम्, स चोभयसाध्यसाधारण एव विषयाभाव-

आलोकदर्पणः ।

द्वितीयेति । व्यतिरेकसहचारखण्डकतयेत्याशयः । यद्यपि व्यतिरेकसहचारो यथाश्रुते न तेन खण्ड्यते नियतव्यतिरेकसहचारखण्डने तु यदा समाप्तिस्तत्पूर्वमवश्यं मङ्गलमिति नियतान्वयखण्डनमपि स्यादेव यदि च व्यभिचारज्ञानविरहकृतो व्यतिरेकसहचारः खण्डनीयस्तदाऽन्वयसहचारोऽपि तादृशः खण्डितः स्यादेव तथाप्यभ्युपगमवादेनाह—न हीति । नचायमभ्युपगमवादोऽपि कथं शङ्काया एवानुक्तिसम्भवादिति वाच्यम्, मङ्गलव्यतिरेके सत्यग्रिमक्षणेऽवश्यं समाप्तिव्यतिरेक इति नियतो व्यतिरेकः मङ्गलतद्व्याप्येतरहेतुसंपत्तौ मङ्गलतद्व्याप्ययोः सतोरग्रिमक्षणेऽवश्यं समाप्तिरिति नियतोऽन्वयो ग्राहको वाच्यः । अनन्यथासिद्धपूर्वोक्तनियतान्वयस्य ग्राह्यपर्यवसन्नत्वादिति यन्मतं तत्र द्वितीयमात्रीयत्वसम्भवात् । वस्तुतः कारणत्वं नानन्यथासिद्धनियतपूर्ववर्त्तित्वम् अयोग्यनानापदार्थघटितत्वेन तस्याप्रत्यक्षत्वापत्तेः । तथा च नैतदनुसारेण सह-

आलोककण्टकोद्धारः ।

न च हेतोरिति । यद्यपि विनापीत्यादिना व्यतिरेकसहचाराभाववदन्वयसहचाराभावोऽप्युपदर्शित एव, अधिकरणान्तरे तद्ग्रहसम्भवान्न तथा उभयत्र तुल्यं तथापि विनापीत्यपिकारेणान्वयसहचारप्रदर्शनात्, तदभावे तात्पर्याभाव उन्नीयत इति भावः । ग्राहकेति । सहचारज्ञानेत्यर्थः । अन्याभावस्य ग्राह्याभावज्ञानत्वात्

आलोकः ।

ग्रहस्य प्रत्यक्षमात्रे प्रतिबन्धकत्वात् । न च ग्राह्यविरहनिश्चयो नास्त्येव जन्मान्तरीयमङ्गलसंशयात् तत्संशयश्च न विरोधी मानमात्रोच्छेदापत्तेरिति वाच्यम्—यद्धीसामग्री यत्र प्रतिबन्धिका विशेषादर्शने सति तत्र तद्धीरपीति दशाविशेषे तस्यापि प्रतिबन्धकत्वात्, प्रकृते चान्वयव्यतिरेकव्यभिचाराभ्यां विशेषदर्शनाभावादिति भावः ।

आलोकदर्पणः

चारो विचार्यः, किन्तु स्वरूपसम्बन्धविशेषः कारणत्वं तद्ग्रहे च यदा समाप्तिस्तत्पूर्वमवश्यं मङ्गलं यदा मङ्गलाभावस्तदनन्तरमवश्यं समाप्त्यभाव इत्येवंरूपयोरन्वयव्यतिरेकयोः संवलितयोरेव ज्ञानस्य जनकत्वमन्वयव्यतिरेकाभ्यामिति यथाश्रुतावेव साध्यहेतू इति सारम् । तस्यापि—संशयस्यापि । इदञ्च मतान्तरेण प्रतिबन्धकत्वेन, प्रतिबन्धनियतत्वस्य विवक्षया च, अस्ति हि संशयस्याप्रतिबन्धकत्वेऽपि तत्सामग्र्यां प्रतिबन्धनियमः ।

आलोककण्टकोद्धारः ।

अधिकरणान्तरे सम्भवेनाशक्यत्वादिति भावः । प्रत्यक्षेति । प्रकृताभिप्रायम् । नचैवं बाधस्य मानमात्रविरोधित्वात् पृथगनुमानशङ्कानुपपत्तिः—संदेहस्य तदविरोधित्वात् विशेषदर्शनसाहित्याच्च । न चैवं व्यभिचारेणेत्याद्युत्तरानुपपत्तिः—तस्य योग्यानुपलब्ध्या निश्चये तात्पर्यात्, बाधो नानुमाने दूषणमिति भ्रमवतो वा शङ्का, अत एव भ्रमखण्डनेनोत्तरमपि घटत इति । यद्धीति । मतभेदेनेदम् । यद्यपि प्रत्यक्षेण व्याप्तिग्रहे व्यभिचारसन्देहस्य विरोधित्वं साम्प्रदायिकमेव तथापि व्यापकाभाववत्तांशनिश्च-

आलोकः ।

अन्योन्याश्रयादिति। सिद्धे जन्मान्तरीयमङ्गलेऽव्यभिचारे सति हेतुताग्रहः कार्यकारणभावे च गृहीते समाप्त्या तदनुमानमित्यर्थः। ननु समाप्तेः कार्यतया हेतुमत्त्वेनास्तु परिशेषान्मङ्गलानुमानमित्यत आह–लोकेति। तदसमवहितसामग्र्यजन्यत्वात्मकपरिशेषा-

आलोकदर्पणः ।

अव्यभिचारे सति— व्यभिचारज्ञानाभावे सति । ननु कार्यकारणभावमगृहीत्वा प्रमत्तानुष्ठितसमाप्तिस्थले प्रमत्तानुष्ठितसमाप्तिर्न मङ्गलपूर्विका मङ्गलासमवहितसामग्र्यजन्यत्वे सति जन्यत्वादिति मङ्गलानुमानं कर्तुं शक्यम् अतो नान्योन्याश्रय इत्याशयेन शङ्कते—

आलोककण्टकोद्धारः ।

यरूपस्यैव तथात्वं न चेह मङ्गलसन्देहे तथेति ध्येयम् । अत एव संशयसामग्र्युपलक्षणमिदमित्यपि भ्रमः । ननु तृणादाविव विघ्नवति स्तोमे मङ्गलसत्त्वे समाप्तिस्तद्विना नेत्यन्वयव्यतिरेकाभ्यां व्यभिचारधीसत्त्वेपि गृह्यतां कार्यत्वम्—न च तत्रावच्छेदक (त्व) रूपकार्यतायाः प्रत्यक्षसिद्धत्वात्तथा न त्वत्रविघ्नध्वंसस्तथेति वैषम्यम्, तत्रापि जातेः कारणव्यङ्गत्वाभ्युपगमात् इति चेन्मैवं विघ्नध्वंसकतामनवगम्य तद्ग्रहाशक्यत्वात् तदवगमे चान्यथासिद्धिप्रतिसन्धानान्न त्वेवं तृणादावित्याशयः । तदिदमाह मूले— लोकेति। सामान्ये व्यभिचारो विशेषेऽन्यथासिद्धिरिति वा समाप्तित्वेन मङ्गलजन्यत्वानुमानेऽन्योन्याश्रयः कार्यत्वेन सहेतुकत्वानुमाने अन्यथासिद्धिरर्थान्तरमिति वा तदर्थ इति वयम् । तदसमवहितेति । अत्र प्रत्यक्षनिरासावसरेनुमाननिरसनमप्रस्तुतम् नापीत्यादिना

आलोकः ।

सिद्धेरित्यर्थः । यद्वा कारणताप्रविष्टव्याप्यनन्यथासिद्धयोर्यथायथं हेतुभ्यामसत्त्वमाह । नचान्यथासिद्धिषु पञ्चसु नैतदन्तर्भावः– अन्यत्र क्लृप्त (नियत) पूर्ववर्तिन एवेत्यादेरवश्यकल्पनीयपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वमर्थः, तथा च तत्रैवैतदन्तर्भाव इति (भावः)॥

आलोकदर्पणः ।

ननु समाप्तेरिति । यदि तु मङ्गलस्य समाप्तिजनकत्वानुमानपरतयैवेयं फक्किका योज्यते तदा प्रत्यक्षप्रकरणे अनुमानोपन्यासे सन्दर्भविरोधो भवतीति ध्येयम् । कार्यतया—सत्यन्तसहितकार्यतया । हेतुत्वेनेति । हेतुत्वविशेषितमङ्गलानुमानं, पूर्ववर्तित्वविशेषित मङ्गलानुमानम् , मङ्गलपूर्विकेत्यनुमानमिति यावत् । हेतुमत्त्वेनेतिपाठे समाप्तेर्विशेषणमिदम् । अन्योन्याश्रयोपपादकत्वेऽस्य ग्रन्थस्य चकारासङ्गतिरित्यरुचेराह—यद्वेति। अवश्येति । तेन महत्त्वेनानेकद्रव्यवत्त्वस्यान्यथासिद्धिर्भवतीति भावः । यथाचैवमन्यथासिद्ध्यन्तरवैयर्थ्यं न भवति तथा वक्ष्यते ।

आलोककण्टकोद्धारः ।

पुनरुक्तं चेति भ्रान्तदेशनम् । अस्य कारणतां प्रत्यक्षसिद्धां मत्वा प्राक्तनमङ्गलानुमानपरत्वात्, अग्रिमस्य तु कारणतासाधकत्वादेवेति भेदात् । मूलस्थचकारासङ्गतेराह— यद्वेति । अवश्येति । यद्यपि यथाश्रुतेऽपि स्वतः सिद्धविघ्नाभावस्थले क्लृप्तसामग्र्यैवोपपत्तेरन्यथासिद्धिरेव तथापि श्रौतानन्यथासिद्धिरक्षार्थं विघ्ना-

आलोकदर्पणः ।

केचित्तु मङ्गलासमवहितसामग्र्यजन्या समाप्तिर्यदि मङ्गलजन्या न स्यादजन्या स्यादिति तर्केण व्यभिचारशङ्कानिरासः स्यादत आह-मूले लोकेति । तथाच मङ्गलासमवहितसमाग्र्यजन्यत्वात्मकविशेषणासिद्धौ नोक्ततर्कस्य मङ्गलजन्यत्वात्मकविपर्ययपर्यवसानमिति भाव इत्याहुः ।

आलोककण्टकोद्धारः ।

त्यन्ताभावस्थले प्राक्तनसुकृतसम्पत्तेर्हेतुत्वं कल्प्यं न चात्र सास्ती-त्याशङ्क्यविवक्षेति ध्येयम् । अत्रानुपजीवकेत्यपि देयं तेन व्यापारेण व्यापारिणो नान्यथासिद्धिः । न च प्रत्यक्षे दण्डसंयोगादौ नोपजीवकता कारणप्रत्यासत्तित्वेनापि कारणत्वात्तस्य दण्डीयकारणतोपजीवकत्व-स्य स्वतन्त्रकारणत्वेऽप्यनपायादितिनव्याः । तन्न कारणतागर्भत्वेनात्मा-श्रयापत्तेः।तस्मात्तत्सहभूतमित्यत्रानवश्यकल्प्यत्वमपि विशेषणम् । तच्च विनिगमकाभावान्न दण्डे एव चरमस्यापि तत्तद्व्यक्तिभिरावश्यक-त्वान्न चरमेणान्यथासिद्धिः अतएव कारणतायां नियमानन्तर्भावविनिग-मनाभावेन पूर्वभावमात्रे दण्डवद्रासभस्याप्यवश्यकतापत्तेर्नियमांश-प्रवेशोपि, तत्प्रवेशे तस्य रासभापेक्षयावश्यकत्वात् दण्डरूपाकाश-योरप्यनयैव व्यावृत्तेरन्यथासिद्ध्यन्तराभिधानं व्यर्थमित्यवशिष्यते तदप्यनावश्यकल्प्यत्वानाभिधानेनैव निरस्तं न ह्यावश्यकत्वे करण-त्वांशे आत्माश्रयात् किन्तु गौरवसहिते पूर्वनैयत्ये अनेकद्रव्यवत्त्वे च गौरवान्न तथा, नचोक्तयोस्तथा । यद्यपि घटव्यक्तौ रासभव्यक्तिरप्यव-श्यकल्प्यैव तथाप्यन्यथासिद्ध्यन्तराक्रान्तावश्यकल्प्यभिन्नत्वं विव-क्षितं स च विशिष्टाभावः तत्रापि । नचैवं दण्डसाधारण्यं स्वप्रागभाव-व्यापकप्रागभावाप्रतियोगित्वेनाप्यवश्यकल्प्यविशेषणात् । नियमोपा-दानान्न व्यभिचारिसाधारण्यम् । यत्तु, दण्डत्वस्यानया असंग्रहात्तत्-संग्रहार्थमन्याभिधानमिति तन्न दण्डत्वस्यापि हेतुत्वे दण्डस्य सम्बन्ध-घटकत्वेनावश्यकत्वात् कारणप्रत्यासत्तेरपि तत्त्वादिति अधिकं वक्ष्यते।

**नापि मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वात् दर्शवदिति फलसिद्धौ प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वात् फलन्तरस्यातथाभावात् विश्वजिन्न्यायेन फलकल्पने गौरवात् परिशेषानुमानेन तत्कारणताग्रहः, व्यभिचारेण कारणत्वस्याभावात् उपायसहस्रेणापि ग्रहीतुमशक्यत्वात् ।**

---

ननु तस्य पुरुषस्य तदानीमनुमानेनैव मङ्गले समाप्तिकारणत्वग्रहोऽस्तु इत्यत आह—**नापीति । मङ्गलमिति ।** नमस्कारादिकमित्यर्थः, नतिस्तुतिसाधारणस्य मङ्गलत्वस्यैकस्याभावात् । **अवितगीताशिष्टाचाराविषयत्वादिति ।** अविगीतो यः शिष्टानामाचारस्तद्विषयत्वादित्यर्थः । विषयत्वादित्येतन्मात्रोक्तौ ज्ञानविषयसुखे व्यभिचारोऽत आचारविषयत्वादित्युक्तम् । आचारश्चात्र कृतिः विषयत्वश्रुतेः ज्ञानेच्छाद्वेषकृतिसंस्कारा एव सविषयकाः तत्र व्यापारसामान्यार्थकस्याङ्पूर्वचरतेर्व्यापारविशेषकृतिपरत्वमेवोचितम् न तु व्यापारभिन्नज्ञानादिपरत्वमिति ध्येयम् । विषयता चात्र विधेयतारूपाऽतो नोद्देश्यतया कृतिविषयत्वमादाय फले व्यभिचारः । चैत्यवन्दने नास्तिककृतिविषयत्वस्य सत्त्वाद्व्यभिचारः स्यादतः शिष्टेत्याचारविशेषणमुपात्तम् । शिष्टत्वं च इष्टसाधनत्वांशे भ्रमरहितत्वम् इति न दोषः चैत्यवन्दनविषयकनास्तिककृतेर्भ्रमजन्यत्वात् । एवमपि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसफलत्वस्य नरकसाधने श्येनेऽसत्त्वात् शिष्टकृतिविषयत्वस्य च सत्त्वाद्व्यभिचारःऽस्यादतोऽविगीतेत्याचारविशेषणम् अविगीतत्वं च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वं तथा च श्येने हेतोरसत्त्वेन न व्यभिचार इति बोध्यम् । 'इति फलसिद्धौ' इत्यनुमानेन सफलत्वसिद्धौ जातायाम् 'परिशेषानुमानेन' मङ्गलं समाप्तिफलकं

समाप्त्यन्याफलकत्वे सति सफलत्वात् इत्यनुमानेन 'तत्कारणताग्रहः' तस्य पुरुषस्य तदानीं मङ्गले समाप्तिकारणताग्रह इति योजना । एतदनुमाने पूर्वानुमानं विशेष्यासिद्धिनिरासकतयोपयुक्तमिति भावः । ननु समाप्तिविषयककामनावत्पुरुषाकर्तृकत्वेन मङ्गले समाप्तिफलकत्वाभावः साध्यताम् यो यद्विषयककामनावत्पुरुषाकर्तृकः स न तत्फलक इति सामान्यतो दृष्टानुमानादित्यत आह—**प्रारिप्सितेति** । 'अपेक्षितत्वेन' मङ्गलकर्तुः कामनाविषयत्वेन समाप्तेरुपस्थितत्वात्समाप्तिफलकत्वाभावसाधकहेतोरज्ञानादसिद्धिरिति भावः । ननु समाप्तिभिन्नस्य ग्रामादेरपि मङ्गलफलत्वसम्भवात् तत्रापि समाप्त्यन्याफलकत्वरूपविशेषणस्यासिद्ध्या कथमुक्तानुमानसम्भवोऽत आह—**फलान्तरस्येति । अतथाभावादिति** । ग्रामादेर्मङ्गलकर्तुः कमनाया अविषयत्वेन अनुपस्थितत्वादित्यर्थः । तथा च न विशेषणासिद्धिरिति भावः । ननु यथा 'विश्वजिता यजेत' इत्यत्र अश्रुतोऽपि स्वर्गः 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति सूत्रेण विश्वजिद्यागफलत्वेन गृहीतस्तथेहापि मङ्गलफलं स्वर्ग एव किं न स्यात्तथा च विशेष्यासिद्धिस्तदवस्थेत्यत आह—**विश्वजिन्न्यायेनेति । गौरवादिति** । तत्र कस्यापि फलस्यानुपस्थित्या स्वर्गस्य सर्वाभिलाषास्पदत्वेन फलत्वं युक्तमत्र तु न उपस्थितं परित्यज्यानुपस्थितकल्पने गौरवादित्यर्थः । **परे** तु स्वर्गमात्रस्य फलत्वे नियमतः समाप्तिकामनया शिष्टानां मङ्गलानुष्ठानानुपपत्तिः स्यादतः समाप्तिस्वर्गयोरुभयोः फलत्वं कल्पनीयं स्वर्गफलकत्ववादिनेति गौरवमिति **व्याचक्षते** । 'व्यभिचारेण' व्यभिचारज्ञानेन, अन्यथासिद्धत्वग्रहेण चेति शेषः । 'कारणत्वस्याभावात्' कारणत्वाभावज्ञानात् तथा च बाध इति भावः । 'उपायसहस्रेण' हेतुसहस्रेण 'ग्रहीतुमशक्यत्वात्' मङ्गले समाप्तिकारणत्वस्येति शेषः ।

प्रगल्भी ।

मङ्गलमिति । मङ्गलत्वं च आरम्भपूर्वसमये निर्विघ्नपरिसमाप्तिकामनया शिष्टाचारविषयत्वं पक्षतावच्छेदकमत्रोक्तम् । तेन मङ्गलत्वस्य प्रारिप्सितनिर्विघ्नसमाप्त्यसाधारणकारणत्वरूपतया प्रथमं दुर्ग्रहत्वमिति दूषणमपास्तम् । शिष्टेति । शिष्टोऽत्रेष्टासाधनतांशे भ्रमरहितो बोध्यः । तेन सफलत्वभ्रमेण केनचिद्वेदप्रामाण्याभ्युपगन्त्रा कृते निष्फले कर्मणि न व्यभिचारः । आचारः कृतिरेव । फले च कृतिविषयत्वाभावान्न व्यभिचारः । कृतिजनकचिकीर्षाविषयत्वस्यैव जीवनयोनिभिन्नजन्यकृतिविषयत्वात् । फलस्यातथात्वात् । तदविषयत्वेऽपि क्रियाद्वारा फलस्य सुखादेः कृतिसाध्यत्वात् । सफलत्वं च साध्यमुद्देश्यफलकत्वं बोध्यम् । क्वचिदविगीतेति विशेषणं तदा साध्यं बलवदनिष्टाननुबन्धीष्टसाधनत्वं बोध्यम् । अविगीतत्वं च बलवदनिष्टानुबन्धिभिन्नत्वमुक्तम् । तेन नागम्यागमनादौ व्यभिचारः । यत्तु वेदानिषिद्धत्वमविगीतत्वमुक्तमिति तन्न बहुदुःखकारणेऽल्पसुखसाधने वेदानिषिद्धे लौकिके कर्मणि व्यभिचारात् । अनुमानात्पूर्वम् उक्तरूपशिष्टकृतिविषयत्वं महाजनपरिग्रहेण सामान्यतो ग्रहीतुं शक्यमिति न पक्षे हेतोर्ज्ञानासिद्धिः । परिशेषे कर्त्तव्ये च प्रकृतसाध्यान्तर्गतबलवदनिष्टाननुबन्धित्वभागो न तत्र हेतौ विशेषणं बोध्यम् । प्रकृते तदुद्देश्यसिद्ध्यर्थमुपात्तम् । तदानीं-मङ्गलाचारसमये । अपेक्षितत्वेनेति । मङ्गलाचारप्रवृत्तशिष्टस्य कामनाविषयत्वेनेत्यर्थः । यत्र तादृशोऽभिलाषः श्रुतस्तत्र विचारस्यारब्धत्वात् अपेक्षितत्वज्ञानं भवत्यनुमातुः । उपस्थित-

प्रगल्भी ।

**स्वात्**–प्रतीतत्वादर्थात्परिशेषानुमानकर्त्रेत्यर्थः। **फलान्तरस्येति** । प्रारिप्सितसमाप्त्यन्यफलस्य मङ्गलाचारसमये तदाचारप्रवृत्तशिष्ट- कामनाविषयत्वाभावेन परिशेषानुमानकर्त्रा प्रतीतत्वादित्यर्थः । एवञ्च मङ्गलं न समाप्त्यन्यफलकं तत्कामनां विना शिष्टेन क्रिय- माणत्वात् । यत्कामनां विना शिष्टेन यत्क्रियते तन्न तत्फलकं सम्मतवादिति द्वितीयानुमानमिहाभिमतम् । ननु शिष्टस्य समाप्ति- कामनान्यकामनापि विश्वजिन्न्यायेन फलं कल्पयित्वा स्थितस्य हृदि वर्त्तते तथा च विशेषणासिद्धौ द्वितीयहेतोरासिद्धिरित्यत आह–**विश्वजिदिति** । विश्वजिन्न्यायेन मङ्गलाचारप्रवृत्तशिष्ट- कामनाविषयतयोपस्थितसमाप्तिरूपफलादतिरिक्तस्यानुपस्थितस्य स्व- र्गरूपफलस्य शिष्टहृदिस्थत्वेन न कल्पनं गौरवात् । फलोपस्थितौ विश्वजिन्न्यायासम्भवाच्चेति विमर्शात्परिशेषकर्त्तुर्हेत्वसिद्धिवारणमिति भावः । अन्ये तु अनेनैव द्वितीयानुमानेन यद्यपि विश्वजिन्न्याय- विषयस्वर्गफलकत्वव्यतिरेकोऽपि सिद्धस्तथाप्यन्यत्र सामान्यतः फलसिद्धौ सत्यां तद्विशेषकल्पने विश्वजिन्न्यायोऽवतराति अत्र तु तदवतारे किं बाधकमित्येतावन्मात्रजिज्ञासायामाह—**विश्वजि- न्न्यायेति** । तन्न प्रकृतोपयोगितयैव व्याख्यातत्वात्, एतादृश- स्याध्याहारे मानाभावात् । **परिशेषानुमानेति** । मङ्गलं समाप्ति- फलकं तदन्यफलाभाववत्त्वे सति सफलत्वादित्यनुमानेनेत्यर्थः । **व्यभिचारेणेति** । प्राचस्य कारणत्वस्याभावनिश्चयादुक्तानुमान- बाधादित्यर्थः । ननु प्रमत्तानुष्ठितसमाप्तिस्थले जन्मान्तरीयमङ्गल-

प्रगल्भी ।

संशयसत्त्वान्न कारणत्वाभावनिश्चयः किन्तु तत्संशयः स च ग्राह्यसंशयो न परिशेषानुमानपरिपन्थीतिचेन्न—तत्र जन्मान्तरीयमङ्गले मानाभावात् कारणत्वाभावनिश्चय एवेत्यभिमानादेवोक्तमितिवदन्ति । तच्चिन्त्यम् । वस्तुतस्तु हेतुमति साध्यसन्देहस्य व्यभिचारसंशयत्वेन व्याप्तिग्रहात्पूर्वं तर्कं विना प्रतिबन्धकत्वात् प्रकृते विघ्नध्वंसजन्यसमाप्तिं पक्षीकृत्य तर्कस्य वक्तुमशक्यत्वात् तेनोक्तप्रथमानुमानासंभवस्तृतीयपरिशेषानुमाने च संदिग्धासिद्धिरितिभावः ।

आलोकः ।

अनुमानमाशङ्क्य निषेधति नापीति । सफलं बलवदनिष्टाननुबन्धीष्टसाधनं न त्विष्टसाधनमात्रं हेतावविगीतपदवैयर्थ्यापत्तेरिति

आलोकदर्पणः ।

**अनुमानम्**—मङ्गलं समाप्तिफलकं समाप्तीतराफलकत्वे सति सफलत्वादित्याकारकम् । हेतौ विशेष्यासिद्धिमुद्धर्त्तुं मङ्गलं सफलमित्य-

आलोककण्टकोद्धारः ।

'मङ्गलमिति मूलम्' यद्यपि निर्विघ्नसमाप्त्यसाधारणकारणत्वं मङ्गलत्वं न पक्षतावच्छेदकं प्रागनिश्चयात्तथापि तत्कामाचारविषयत्वं नतित्वादिकं वा तथेत्याशयः । **बलवदिति** । नन्वेतावत्साध्यकरणेऽर्थान्तरं परिशेषानुमाने विशेष्यमात्रस्य सिसाधयिषितत्वादिति । अत्र मान्याः परिशेषानुमाने न समाप्तिमात्रफलकत्वं साधनीयं किन्तु बलवदनिष्टाननुबन्धित्वविशिष्टं मङ्गलमाचरन्तीत्युक्त्याचारमूलीभूतज्ञानस्य प्रकृतत्वात् । तथा चानिष्टसम्बलितसमाप्तिसाधने व्यभिचारवारणाय हेतावपि तत्प्रवेशादत्रापि तत्प्रवेश इति । वयं तु

आलोकः ।

भावः । शिष्टपदं चाभ्रान्तपरं निष्फले चैत्यवन्दनजलताडनादौ वैधरागजप्रसङ्गयोरभावेन वेदाद्यनिषिद्धतयाऽविगीते व्यभिचारवारकम् ।

आलोकदर्पणः ।

नुमानं व्याचष्टे—सफलमिति । शिष्टपदं चेत्या देस्तद्विषयक्रियात्वादित्यन्तस्यायं निर्गलितोऽर्थः । अविगीतत्वे सति इष्टसाधनतांशभ्रमरहितस्य या कृतिः साध्यतया तद्विषयत्वात्, साध्यतयेति परित्यागे तद्विषयत्वे सति फलान्यत्वादिति । अत्र दूरस्थसरोऽवगाहनादौ व्यभिचारवारणाय वलवदनिष्टाजनकत्वम् अविगीतपदेन विविक्षणीयं न तु वेदानिषिद्धत्वमिति तत्त्वम् । केचित्तु दूरस्थसरोऽवगाहनवारणाय लौकिकप्रमाणप्रमापितेष्टजनकत्वाभावरूपमलौकिकत्वमधिकं देयम् अविगीतपदं चैवं श्येने व्यभिचारवारकमिति

आलोककण्टकोद्धारः ।

यथाश्रुतेऽपि नार्थान्तरं तेन विना व्यर्थविशेषणतया विशिष्टहेतौ व्याप्तिग्रहासम्भवेन व्याप्तिग्रहद्वारा प्रकृतसाधकत्वात् अविशिष्टस्य हेतुत्वसंभवेपि प्रकृते उपयोगात् अत एव साध्ये विशेषणं प्रक्षिप्य हेतौ व्यर्थत्वमुद्धरन्ति, नापि गौरवं-तेन विना विशिष्टव्यापकत्वस्याग्रहेण प्रामाणिकत्वात्, व्यापके तस्यादोषत्वाच्चेति वदामः । यत्तु तदन्याफलकत्वांशे एकविशेषाभावसिद्ध्यर्थं वलवदनिष्टानुबन्धीष्टाजनकत्वे सतीष्टजनकत्वं साधनीयमिति तन्न अपरविशेषाभावसिद्ध्यर्थमवश्यवाच्यगौरवादस्यापि सिद्धेरत्र तत्प्रवेशतात्पर्यकल्पने श्रुतग्रन्थत्यागे चानौचित्यात्, अविगीतपदस्य तदर्थत्वेन व्याख्यानानुपपत्तेश्च असिद्धत्वात्, सिद्धत्वे च साध्यप्रवेशानुपपत्तेरिति । वैधेति । न च भ्रान्तो निवर्तनीयः अज्ञस्य प्रवर्तनीयतापत्तौ भोजनेऽपि विध्यापत्तेः । तदाहुः—

आलोकः ।

भ्रमश्च फलसाधनतांशे विवक्षितोऽतो न वलवदनिष्टाननुवन्धित्वांश-भ्रममूलके परदाराभिगमनादौ व्यभिचारवारणार्थमुपात्तमविगीत-पदमनर्थकतामापद्येते । अभ्रान्तत्वं च सर्वैकवाक्यतया सुग्रहम् । तदर्थमेव प्राक् तदुत्कीर्त्तनम् । आचारश्च यद्यपि क्रियैव तथापि विषय-त्वश्रुतेः कृतिरेवात्र विवक्षिता । तद्विषयत्वं च यद्यपि भोगेऽपि गतामि-त्यनैकान्तस्तथापि साध्यत्वेन तद्विषयत्वं हेतुः, भोगस्तूद्देश्यतया कृति-विषय इति तत्त्वम् । यद्वा तद्विषयाक्रियात्वादिति हेतुः । वस्तुत शिष्टाचाराविषयक्रियात्वादविगीताचाराविषयक्रियात्वाद्वेति हेतुद्वयम् ।

आलोकदर्पणः ।

तत्र दैवान्मरणफलके ऽश्वमेधीयतुरगरक्षणे व्यभिचारात् । वस्तुत इति । शिष्टपदं समस्ताभ्रान्तपरम् । तेनागम्यागमनादौ न व्यभिचारः ।

आलोककण्टकोद्धारः ।

त्रिकालाप्राप्त्यविषयत्वाद्विधेरिति । तस्माद्विधिनिषेधावन्तरेण प्रवृ-त्तिनिवृत्त्योः संभव एव तदिति सारम् । अतो नेति । यद्यपि बलवदित्यादेरिदानीन्तनस्वीयबलवद्द्वेषविषयदुःखाजनकत्वमर्थो व-क्ष्यते अत एव लघुयत्नसाध्ये गुरुयत्नेन कृते न व्यभिचारः तज्जन्य-दुःखे तदा बलवद्द्वेषाभावात् । तदज्ञानं च तज्जन्यदुःखे द्वेषानुत्प-त्तिदशायां यथार्थमेवेति तादृशस्थले यथाश्रुतेप्यविगीतपदसार्थ-कता तथाप्यसंकोचे गौरवात्, संकोच उक्तः । साध्यतया कृति-विषयत्वं कृतिजनकचिकीर्षाविषयत्वपर्यवसितं तदपेक्षया वक्ष्यमाणं लघ्वित्यत आह–यद्वेति । ननु विशिष्टहेतोः समधुविषभक्षणे व्यभि-चारः, न च तदपि दुरन्तत्वेन निषिद्धमिति वाच्यम् लोकादेव

आलोकः ।

अविगीतत्वं च बलवदनिष्टाननुबन्धित्वं तेन मधुविषसंपृक्तान्नभोजने न व्यभिचारः । तद्ग्रहश्च पूर्ववत् । क्रियात्वादेव न फले द्वितीयहेतावनैकान्तः । क्रियापदस्य फलान्यपरत्वात् । नचाफले व्यभि·

आलोकदर्पणः ।

विषेति । प्रमादकृतेति शेषः । दूरस्थसरोऽवगाहनादिकं चात्रोदाहार्यम् । द्वितीयहेतौ–व्यस्तहेत्वात्मकद्वितीयराशौ । अफल इति । बलवदनिष्टाजनके हस्तचालनादावित्यर्थः । बलवदिति । न च स्वजन्येष्टापेक्षया यदधिकानिष्टजनकं तद्भिन्नत्वस्य बलवदनिष्टाननुबन्धित्वस्य निष्फलकर्मण्यपि सत्त्वमिति वाच्यम्, स्वजन्यानिष्टापेक्षयाऽन्यूनफलेन यद्रहितं तद्बलवदनिष्टानुबन्धि तद्भिन्नत्वस्य फलवत्त्वे सति अधिकानिष्टजनकभिन्नत्वस्य वा विवक्षितत्वा-

आलोककण्टकोद्धारः ।

निवृत्तिसिद्धेर्निष्फलत्वात्, नाप्यात्महिंसात्वेन नरकसाधनत्वात् निषेधावकाशः, कामकृते तथात्वेपि प्रमादकृते शिष्टानामविगानेनानिषेधोन्नयनात् । तत्राधप्रायिश्चत्ताभ्युपगमेऽपि लौकिकानिष्टफलकस्य गुर्वन्नभोजनादेस्तथाप्यवारणाच्चेति चेत् न बलवदनिष्टाजनकत्वस्याविगीतपदार्थत्वात् । एवं सति शिष्टपदानर्थक्यं निष्फलस्येष्टासंबन्धेन बलवदनिष्टहेतुत्वात्, कष्टं कर्मेति न्यायादतस्तथैव हेत्वन्तरमाह; वस्तुत इति । न द्वितीयेति । शिष्टाचारविषयक्रियात्वे हेतावविगीतत्वं विशेषणमिति प्रागुक्तं संप्रति अविगीताचारविषयत्वं पृथगेव हेतुरित्युच्यते तत्रापि क्रियापदेनैव न फले अनेकान्त इत्यर्थः द्वितीयपक्षीयहेतुद्वय इति ऋजवः । यत्तु द्वितीयः शिष्टाचारविषयत्वं हेतुः कण्टकोद्धारक्रमेण तस्य तथात्वात् अविगी-

आलोकः ।

चारः । बलवदनिष्टाननुबन्धित्वस्य फलगर्भतया तत्र हेत्वभावात् । आचारविषयस्य फलाजनकस्य बलवदनिष्टजनकत्वनियमात् । कष्टं कर्म्मेति न्यायात् । यथाश्रुतेऽपि तत्र तदभावाच्च । न विप्र इत्या-

आलोकदर्पणः ।

दिति । यथाश्रुतेऽपीति । तथाचानिषिद्धकृतिविषयक्रियात्वं हेतुरित्यर्थः । बलवदनिष्टेत्यादौ हेतुराचारेति । यथाश्रुतेऽपीत्यत्र हेतुर्न विप्र इति । यथा च बलवदनिष्टाजनकत्वभ्रमेणागम्यागमनादौ प्रसक्तिस्तथेष्टजनकत्वभ्रमेण निष्फलेऽपि प्रसक्तिरस्तीति निषेधसम्भवादिति भावः । नन्विदं प्रमादकृतमधुविषसम्पृक्तान्नभोजने दूरस्थसरोऽवगाहने च व्यभिचारीति चेत् नरकाननुबन्धीष्टसाधनत्वस्य-

आलोककण्टकोद्धारः ।

तत्वस्य स्वजन्येष्टगर्भत्वेन तेनैव फलवारणे तत्र क्रियापदानुपयोगादिति व्याख्यातम् । तन्न कण्ठतः क्रियापदोपानात् स्वपदस्यान्योन्याभावप्रतियोग्यर्थत्वेन व्याख्यास्यमानत्वाच्च । फलान्येति । भोगान्येत्यर्थः । फलगर्भतयेति । स्वजन्येष्टापेक्षया बलवत्त्वस्य वाच्यत्वादिति भावः । ननु तत्रापि स्वपदेन न प्रकृतव्यक्तिरेव वाच्या मङ्गलजन्येष्टाप्रसिद्धेः । अन्यथासिद्धसाधनात् । अनिष्टाजनकत्वस्यापि हेतुप्रवेशानुरोधेन सिद्धत्वाभ्युपगमात् स्वपदार्थाननुगमेन पक्षदृष्टान्तसाधारणहेत्वलाभाच्च किन्तु विषभक्षणाद्येव प्रतियोगिकोटिप्रविष्टं तदन्यत्वं वा फलेऽपीत्यस्वरसादाह—यथाश्रुतेपीति । अनिषेधार्थत्वेपीत्यर्थः । अत्र हेतुः—न विप्र इति । तथा चापर्युदस्तत्वं तदर्थः । अत एव न सविषान्नभक्षणेऽपि व्यभिचारः, दुरन्तत्वेन तस्यापि पर्युदासाद् । ननु निषिद्धत्वेन तस्यानिष्टजनकत्वादित्यर्थः

आलोकः ।

दिना तत्रापि वेदानिषेधात् । वस्तुतः शिष्टपदं वेदप्रामाण्याभ्युपगन्तृपरम् । तदाचारत्वं तन्नियताचारत्वम् । तदनभ्युपगमासंभावितचारत्वमिति यावत् । तद्ग्रहः पूर्ववत् । अत एव दर्शो दृष्टान्तः । तथा च सति रात्रिश्राद्धादावेव व्यभिचार इत्यविगीतपदमिति ।

आलोकदर्पणः ।

प्रवृत्तिविषयतावच्छेदकरूपावच्छेदेन बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वस्य वा साध्यत्वात् । यद्वा उक्तानुशयादाह वस्तुत इति । क्वचित्पुस्तके यथाश्रुतेऽपि तदभावादिति नास्ति । तत्र बलव-

आलोककण्टकोद्धारः ।

विशिष्टनिषेधस्य विशेष्यविषयत्वासम्भवेन विशेषणविषयत्वस्यानिष्टजनकत्वे मानस्य प्रकृते विशेष्येष्टसाधनत्वस्य निषेधसंभवेनाभावात् । यदि चाचारविषयस्येत्यादि मध्ये पाठस्तदाप्येवमेव हेतुसाध्यभावः, यस्य येनेत्यादिन्यायात् । नन्वेवं प्रसज्यप्रतिषेधादपर्युदस्ते ऽगम्यागमनेऽनेकान्तः मैवम्—अत्र पक्षे सफलत्वमात्रस्य साध्यत्वादधिकस्य व्यर्थत्वात्, न हीदं प्रवर्तकं किन्तु परिशेषः, निवृत्तितात्पर्यकागमाविषयत्वस्य चोभयसाधारणस्य तदर्थत्वात् । आचारविषयस्येत्यादि । यद्यपि स्वजन्येष्टाप्रसिद्ध्या यथोक्तान्योन्याभावस्तथापि तत्राप्यस्त्येव बलवद्द्वेषविषयदुःखाजनकत्वविवक्षायां चनिष्फलजन्यदुःखे तादृशद्वेषाभावदशायां व्यभिचारतादवस्थ्यं तथापि पूर्वदोष एव तात्पर्यम् । ननु शिष्टत्वं यदिष्टोपायतांशे तदा हेतुभेदे अगम्यागमने व्यभिचारः । न च साध्यमपि तावदेव उक्तयुक्त्या विशिष्टस्य साध्यत्वात्, न च सर्वांशाभ्रान्तत्वं तदर्थः । पूर्वोक्तरीत्या तादृशप्रमाया अपि तत्र संभवादत आह—वस्तुत इति । अत्र वेदप्रामाण्या-

आलोकः ।

यद्वा वृथाचेष्टात्वेन निष्फलस्यापि विगीतत्वेनाविगीताचारविषयत्वात् शिष्टाचारविषयत्वादिति हेतुद्वयं शिष्टत्वं चाभ्रांतत्वमित्युक्तम् । आचारविषयत्वं च स्वजनकचिकीर्षाविषयत्वमतो न

आलोकदर्पणः ।

दनिष्टजनकत्वनियमे साध्ये कष्टं कमति, न विप्र इति च हेतुद्वयाभिधानान्नोक्तानुशय इति ध्येयम् । अत्र च वेदप्रामा-

आलोककण्टकोद्धारः ।

भ्युपगन्त्रनभ्युपगमासंभावितत्वमर्थः । तच्च न कल्पितव्रतादौ तत्र तादृशं जैमिनिप्रभृतीनामनभ्युपगमात् । न च रात्रिश्राद्धमप्येवं विहितनिषिद्धत्रयोदशीश्राद्धाद्युपलक्षकत्वात् । यदि तु वेदप्रामाण्याभ्युपगमं विना असंभावितत्वं तदर्थः । तदा अविगीतपदेन तद्वारणम् नन्वविगीतत्वं यद्यनिषिद्धत्वं तदा तत्रापि अप्रसङ्गः, अथ रात्रिश्राद्धवारणार्थमपर्युदस्तत्वं तदर्थः तदा शिष्टपदानर्थक्यं लौकिके निष्फले पर्युदासात्, सफले साध्यसत्त्वात्, श्येनादौ व्यभिचारश्च उभयार्थत्वेपि तत्पदानर्थता—उच्यते अलौकिकेष्टसाधनत्वस्य साध्यतया शिष्टपदस्य भोजनादिवारकत्वात् । यथा च साध्ये विशेषणान्तरप्रक्षेपे नार्थान्तरादि तथोक्तम् । सविषान्नवारणाय वेदप्रामाण्याभ्युपगन्तृपरत्वेप्येतद्वारणार्थमभ्रान्तत्वमपि शिष्टपदार्थ इतिनव्याः । अश्वरक्षादौ तु व्यभिचारोद्भावनमविचारितसुन्दरं सा हि यजमानकर्तृकः प्रैषो वा अनुगन्तृकर्तृकानुगमनक्रिया वाभिमता द्वितीया न वेदप्रामाण्यानभ्युपगमासम्भाविता, वेतनार्थत्वात्, प्रथमा नानिष्टफला विहितत्वात्, अनिष्टस्यानुषङ्गिकत्वात्, अन्यथा यागादिस्थस्य चौरादिना हनने तत्रैवानेकान्तापतेः । उक्तहेतुद्वय एव क्रियापदानन्तर्भावेन पक्षान्तरमाह, यद्वेति । अभ्रान्तत्वं च सर्वांशे ।

आलोकः ।

भोगादौ व्यभिचार इति । यदा चेष्टसाधनताज्ञानं बलवदनिष्टसाधनताज्ञानाभावश्च प्रवृत्तिहेतुरिति मतं तदाऽविगीताभ्रान्ताचारत्वं हेतु-

आलोकदर्पणः

ष्टमिष्टसाधनतांशे विवक्षितम् अन्यथा स्वर्गजनकत्वभ्रमेण कृते जलताडनादौ व्यभिचारात् । एवं च रात्रिश्राद्धस्य शिष्टपदेनैव वारणात् रात्रिश्राद्धादिपदेन श्येनादिकं विवक्षित्वा तद्वारणायाविगीतपदम् । बलवदनिष्टाननुबन्धित्वं च तदर्थः । अन्यथा ऽश्वमेधीयतुरगरक्षणे दैवान्मरणफलके व्यभिचारापत्तेः । नन्विदमपि निष्फलकर्मणि वर्तते तज्जन्यानिष्टाभावात् तथा हि न कलञ्जं भक्षयेदित्यत्र विध्यर्थनिषेधे कर्त्तव्ये कृतिसाध्यत्वस्येष्टसाधनत्वस्य विद्यमानत्वात् बलवदनिष्टाननुबन्धित्वस्य निषेधो वाच्य इति तत्र दुरितापूर्वं कल्प्यते निष्फलत्वे त्विष्टसाधनत्वस्यैवाभावान्न दुरितापूर्वं कल्प्यते । न चैवं विशेषणमात्रमेव सम्यक् स्वजन्येष्टापेक्षयाऽधिकानिष्टजनकभिन्नत्वस्य निष्फले गतत्वादिति । यद्वेत्यारभ्य सर्वमवदातमित्यन्तं क्वचित् पुस्तकेऽस्ति तच्च यथाश्रुतेऽपीत्यादिना वस्तुनः शिष्टाचारेत्यादिना च गतार्थं यद्यपि तथापि पूर्वं क्रियात्वेन फलवारणमिह तु स्वजनकचिकीर्षाविषये-त्यादिविवक्षयेति भेदः । यदा चेति । पूर्वं प्रवृत्तिजनकभ्रमरहितपरे शिष्टपदेऽविगीतपदमनर्थकं स्यादित्युक्त्वा इष्टसाधनतांशभ्रमरहित-परतया शिष्टपदं व्याख्यातम् इदानीं तु बलवदनिष्टाननुबन्धित्वज्ञा-

आलोककण्टकोद्धारः

यदा चेति । तथा च सर्वांशाभ्रान्तत्वमप्यगम्यागमने व्यभिचारीति भावः । न चास्मिन् पक्षेऽनिष्टाननुबन्धित्वं साध्ये न प्रवेश्यमप्रयोजनत्वादिति कथं व्यभिचार इति वाच्यम्, तज्ज्ञानाभावार्थमपि

आलोकः।

रिति संमुख एव ग्रन्थः समीचीन इति सर्वमवदातम्। अपेक्षि-

आलोकदर्पणः।

नस्याजनकतया अगम्यागमनप्रवृत्तिजनकभ्रमरहितपरे शिष्टपदे ऽगम्यागमने तदर्थसत्त्वात्तद्वारणायाविगीतपदं व्याख्यायते बलवद्-निष्टाननुबन्धित्वं च तदर्थः। अन्यथा दूरस्थसरोऽवगाहनादौ व्यभिचारादिति। अत्रायं सङ्ग्रहः—बलवदनिष्टाजनकफलांशभ्रमर हितकृतिविषयत्वादित्याद्यो हेतुः। साध्यत्वेन फलान्यत्वरूपक्रियात्वेन वा विशेषणाद् द्वितीयः। समस्ताभ्रान्ताचारविषयक्रियात्वादिति तृतीयः। बलवदनिष्टाननुबन्धिकृतिविषयक्रियात्वादिति चतुर्थः। यथाश्रुतेऽपीत्यादिनोक्तो वेदानिषिद्धकृतिविषयक्रियात्वादिति पञ्चमः। बलवदनिष्टाजनकवेदप्रामाण्यानभ्युपगमासम्भावितकृतिविषयक्रिय-त्वादिति षष्ठः। तृतीयपञ्चमयोरेव क्रियात्वस्थाने स्वजनकचि-कीर्षेत्यादिविवक्षया सप्तमाष्टमौ। बलवदनिष्टाननुबन्धित्वे सति प्रवृत्तिजनकभ्रमरहितकृतिविषयक्रियात्वादिति नवम इति। ननु बलवदनिष्टानुबन्धीष्टसाधनत्वे साध्यमानेऽर्थान्तरं सफलत्वमात्रस्य हेतुनिविष्टतया साधनौचित्यादिति चेत्—अत्र काश्चित् समाप्तीतर-फलकत्वमपि द्विविधम् बलवदनिष्टानुबन्धि तदननुबन्धि च तत्राद्य-निरासेन विशेषणांशसिद्धिप्रयोजनकतया नार्थान्तरमिति, तन्न, बलवदनिष्टाननुबन्धित्वं हेतूकृतवतो नेदं सिद्धमिति वचने व्याघा-तात् तदघटितहेतुद्वयस्य च दुष्टत्वात्। अत्र केचित् तत्राचार इति पूर्वव्याख्यानादाचारोपयोगिनी बलवदनिष्टाननुबन्धिसमाप्तिजनकता-

आलोककण्टकोद्धारः।

तदभावज्ञानस्योद्देश्यत्वात् यदवगम इति न्यायात्। अस्मत् पितृचरणास्तु समधुविषभक्षणवारणार्थमलौकिकत्वमपि प्रथमपक्षे

आलोकः ।

तत्वेनेति । प्रवृत्तपुरुषेच्छाविषयत्वेन प्रवर्तमानस्य पुरुषस्योपस्थितत्वादित्यर्थः । ननु माभूदन्यन्नियतोपस्थितिकं स्वर्गस्तु सकलकामनाविषयत्वेन नियतोपस्थितिकः फलं भवेदत आह—विश्वजिदिति ।

आलोकदर्पणः ।

ऽत्र साध्या तत्र च बलवदनिष्टाननुबन्धिफलकत्वमेव हेतुप्रविष्टमिति नार्थान्तरमिति । केचित्तु एवं सत्यपि बलवदनिष्टाननुबन्धित्वभागस्य हेतुप्रविष्टस्य सिद्धतया साधनानौचित्येन परिशेषानुमाने कृतिविषयत्वस्यापि साध्यतापत्तेश्च सफलत्वमात्रमत्र साध्यम् फलांशभ्रमरहिताचारविषयक्रियात्वमनिषिद्धाचारविषयक्रियात्वं च हेतुरित्याहुः । प्रवर्तमानस्येति । परिशेषानुमाने प्रवर्त्तमानस्येत्यर्थः । 'फलान्तरस्येति मूलम्' मङ्गलाचारप्रवृत्तपुरुषकामनाविषयत्वाभावेनोपस्थितत्वादित्यर्थः। तथा च मङ्गलं न समाप्तीतरग्रामपश्वादिफलकं तत्कामनां विना क्रियमाणत्वादित्यनुमानान्तरमभिप्रेतम् । समाप्तिफलकत्वव्यतिरेकोऽपि तर्ह्येतस्मादेव हेतोः स्यादित्याशङ्कायामुक्तहेतोस्तत्रासिद्धिप्रदर्शनाय प्रारिप्सितसमाप्तेरित्यादिमूलमिति ध्येयम् । यथा प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यनेन बोधिते रात्रिसत्रे कामनावाचिपदाभावेन

आलोककण्टकोद्धारः ।

विशेषणमाहुः । नचैवं शिष्टपदानर्थकता, बौद्धागममूलकनिष्फलस्यालौकिकाविगीततया तद्वारकत्वात्, लोकपदस्यादृष्टार्थकवाक्यातिरिक्तार्थत्वात् । नन्वलौकिकत्वं यदि प्रमापितत्वगर्भं तदा नैतद्वारणम्, अथ ज्ञापितत्वगर्भं तदा निषिद्धस्याप्यनेन वारणादविगीतपदानर्थता, मैवम्—अविगीतत्वस्य 'दूरादेव जिजीविषुः परिहरेदस्तंगते भार्गवे' इत्यादि निषिद्धशुक्रास्तमय-

आलोकः ।

यथा विश्वजिता यजेतेत्यत्र रात्रिसत्रन्यायेनार्थवादादनुपस्थितेऽपीष्ट विधिबोधितेष्टसाधनतानुपपत्त्या विशेषतः फलोपस्थितिं विना प्रवर्तकत्वान्यथानुपपत्त्या च विशेषतः फले कल्पनीये ग्रामपश्वादीनां गौणप्रयोजनतया स्वर्गापवर्गयोरेव तथात्वेन तयोरप्यवर्गस्याभावरूपतया लघुः स्वर्ग एव फलं कल्प्यते तद्वदिहापीत्यर्थः । **गौरवात्**-अधिकारिद्वयकल्पनागौरवात् न त्वनुपस्थितिकल्पना-

आलोकदर्पणः ।

फलत्वविशिष्टाश्रवणेऽपि न स्वर्गः फलं तथा विश्वजित्यपि मास्त्वित्यत आह-रात्रीति । तत्र फलत्वाश्रवणेऽपि प्रतिष्ठात्मकफलस्वरूपं प्रतितिष्ठन्तीत्यर्थवादेनोपस्थितमतस्तत्र फलांशमात्रकल्पना, स्वर्गफलकत्वे तु धर्मधर्म्युभयकल्पनेऽतिगौरवान्न स्वर्गफलकत्वं विश्वजिति तु न तथा फलस्वरूपमप्युपस्थितमस्तीत्यर्थः । विधीति ।

आलोककण्टकोद्धारः ।

कालीनदेवदर्शनादिवारकत्वादिति । रात्रिसत्रेति । यथा ज्योतिर्गौरायुरित्यादिवाक्योत्पन्नकर्मसमुदाये रात्रिसत्रपदाभिधेये फलविशेषजिज्ञासायामत्यन्ताश्रुतस्वर्गादिकल्पने गौरवं विश्वजिन्न्यायापावादेन प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यर्थवादश्रुतप्रतिष्ठाया फलत्वलाभार्थं प्रतितिष्ठन्तीत्यस्य सन्गर्भत्वं यत्तदोर्व्यत्यासश्च क्रियते न तथा प्रकृते, अर्थवाद इत्यर्थः । गौणेति । तथा च तत्फलत्वेऽपि मुख्यफलमन्वेष्टव्यमेव स्यादिति भावः । अभावरूपतयेति । एतेन पापाभावोऽपि व्याख्यातः । अधिकारद्वयेति । न चेदं गौरवं फलमुखतया न दोषो निषादस्थपत्यधिकरणन्यायादिति वाच्यम्

आलोककण्टकोद्धारः ।

विनिगमकान्तराभावे तस्यापि विनिगमकत्वात् स्वतो बाधकं हि तन्न भवति कल्पनोच्छेदापत्तेः तुल्यशीलयोस्तु विनिगमकं भवत्येव भावार्थाधिकरणादौ बहुधा तस्यैव मूलत्वात् लघुरपीति न्यायात् तत्र हि सोमस्य भावनाकरणत्वे यागस्य तदङ्गत्वे दृष्टद्वाराभावाददृष्टद्वारत्वे गौरवम् सोमस्य तु क्रियास्वरूपनिष्पादकतया नादृष्टापेक्षेत्येव फलमुखं गौरवं विनिगमकम् अत एवाष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इति विधिभ्यामुपनयनाध्यापने निरधिकारे एव श्रुते तत्र द्वयोः साधिकारत्वकल्पने गौरवादेकत्रैव तत्कल्पनप्राप्तावध्यायनस्यार्थवादिकाचार्यककामाधिकारित्वे संनिधिश्रुतोपनयनस्य दृष्टोपनेयासत्तिद्वाराङ्गत्वं निर्वहति अध्यापनस्य तु उपनयनेन दृष्टं द्वारमिति अदृष्टद्वारकतागौरवादध्यापनमेव प्रधानमुपनयनं तु तद्द्वारा तदङ्गम् तदनुरोधाच्चोपनयीतेति सम्माननादिसूत्रविहितात्मनेपदलब्धमाचार्यकरणरूपं फलमङ्गिन्यध्यापने उपसंह्रियते न च सन्निहितोऽप्युपनीतोऽकिंचित्कुर्वाणोऽध्यापनस्योपकरोतीति तत्कर्माकाङ्क्षायां स्वाध्यायोऽध्येतव्य इति सन्निधिश्रुतस्वाध्यायाध्यनमेव कर्तृसाकाङ्क्षं न्यायात्तथावगम्यत इत्येवमध्यापनविधिरेव स्वविधिविहितमप्यध्ययनं प्रयुङ्क्ते इति न तद्विधेरनुष्ठापकतार्थं पृथङ्नियोज्यकल्पनेति प्राभाकरा अपि वदन्ति । अत एव च तथाप्यभीष्टपूर्वकालाङ्कमङ्गलानुमाने गौरवमित्यादिवत्सेश्वरोऽपि संगतः तद्गौरवस्यापि फलमुखत्वात् अत एवार्थापत्तावनयोरेकं बाध्यमिति सामान्यतो दृष्टे तादृशमेव गौरवं विनिगमकं वक्ष्यतीति वस्तुगतिः मङ्गलं ग्रन्थादिना समानाधिकारं न वेति फलान्तर्भावेणैव गौरवादिति नव्याः । अस्मत्पितृचरणास्तु स्वर्गस्य सकलपुरुषीयकामनाविषयत्वेऽपि न सर्वदा सर्वकामनाविषयत्वं मानाभावात् न हि पाकाद्यर्थं मङ्गले प्रवर्तिष्णुः स्वर्गं कामयते कथं तर्हि स्वतोऽसुन्दरतया समाप्तावेव कामनालाभायुद्देशादिति

आलोकः ।

गौरवात् ग्रामपश्वादिसाधारणतया पृथक्शङ्कानुदयात् । विश्व-

आलोकदर्पणः ।

विशेषाभावे सामान्यस्यानुपपत्त्येत्यर्थः । पृथक्शङ्केति—यद्यपि सामा-
न्यतः फलेऽवगते विशेषतः फलकल्पनावसरेऽन्यत्र विश्वजिन्न्या-
यावतारो दृष्टोऽत्र तु तदवतारे किं बाधकमित्येतावन्मा-
त्रजिज्ञासायां विश्वजिदितिग्रन्थः सङ्गच्छत एव तथापि स्वर्ग-
कामनायाः समाप्तिकामनाप्रयोजकत्वेनावश्यंभावादनुपस्थितकल्प-
नागौरवादित्यस्यासिद्धिरेव मुख्यतोऽत्र दोष इति भावः ।
अत्र वदन्ति स्वर्गस्य समाप्तिकामनाप्रयोजककामनाविषयत्वेऽपि
साक्षात्फलकामनाया एवाधिकारिविशेषणतया अधिकारिविशेषणी-
भूतकामनाविषयत्वाभाववतःफलत्वकल्पने गौरवादिति विवक्षितोऽ-
र्थः तथा च नासिद्धिरिति तन्न विश्वजिन्न्यायेन स्वर्गफ-

आलोककण्टकोद्धारः ।

ब्रूमः । यत्तु सकलग्रन्थादीति व्याख्यानं यावत्कीर्तिरिति स्मरणात्
तदप्यनुपयुक्तपाकादिकामनाऽविषयत्वेन विनिगमनासंभवात् यदाह
आकरे नियमेनेति । तस्मादनुपस्थितिरेव गौरवम् तदुपपाद-
नार्थं च समाप्तिस्तदानीमित्यादिपूर्वप्रतीकमिति न कोऽपि दोष
इति व्याचक्षते । पृथगिति । ननु तवाप्यपेक्षितत्वमधिकारिविशेष-
णकामनाविषयत्वम् अतथाभावश्च तादृशकामनाविषयत्वाभाव एव
वाच्यः कामनामात्रभावाभावयोः प्रकृतानुपयोगात् स चाभावः
स्वर्गसाधारणः अन्यथा तत्फलत्वस्य गौरवसहस्रेणाप्यबाध्यत्वा-
दिति पृथगशङ्कानुत्थानम् यथा कथञ्चिदुत्थानं च समानमित्युद्धारः ।
अत्र ब्रूमः— न हि तथाभावाभावौ फलत्वाफलत्वनिश्चयं विनाऽत्र

आलोकः ।

जिद्वत्स्वर्गफलकत्वे हि प्रधानतयाधिकारिभेदः अङ्गत्वे च प्रधानाधिकारिकर्तव्यत्वेनाधिकाराभेदः । तदुक्तं **महार्णवे वत्सेश्वरेण** तथाप्यभीष्टपूर्वकालाङ्गकमङ्गलानुमाने गौरवमतो लाघवेनाङ्गताबोधकवेदानुमानमेवेति । वस्तुतो मङ्गलस्य विश्वजित्साम्ये तद्वदारम्भसमयनियमो न स्यात् । न चारब्धपूर्वकालाङ्गतयैव तदुपपत्तिः, तस्याधिकारिविशेषणतापत्तेः । तथा च पूर्वकालत्वनिश्चयः प्रवर्त्तकः । स च पूर्व (काल) त्वस्य प्रागभावगर्भतया प्रागभावत्वग्रहस्य भाविनि मानाभावेन ( अशक्यतया ) दुःसंभवः । अत एव दर्शपौर्ण-

आलोकदर्पणः ।

लकत्वं वदतां स्वर्गकामनाया एवाधिकारिविशेषणतया तदभावस्यासिद्धत्वादिति । अधिकारिद्वयकल्पनागौरवं विवृणोति विश्वजिद्वदिति—मानाभावेनेत्यनन्तरम् अशक्यतयेति शेषः ।

आलोककण्टकोद्धारः ।

शक्यनिश्चयौ प्रत्यक्षश्रुतेरभावात् तथा चान्योन्याश्रयः यच्चोक्तं सामान्याभावो अनुपयुक्त इति, तदप्ययुक्तं कामनासामान्यस्य फलत्वाप्रयोजकत्वेपि तत्सामान्याभावस्याफलत्वाविनाभावात्, तथाचान्यस्य फलत्वे तस्य कामनाविषयत्वं कल्प्यं समाप्तौ तु तत्क्लृप्तमित्युक्ते स्वर्गोपि तत्र क्लृप्तमिति शङ्कोत्थानं नासंगतमिति दिक् । मङ्गलस्य स्वर्गफलकत्वे अनुष्ठानसमयनियमानुपपत्तिकालविशेषस्याऽङ्गत्वात्, यद्यपि नास्तीत्यर्थकं वत्सेश्वरे पूर्वप्रतीकं तस्याधिकारीति सादृश्यगर्भं तच्च ज्ञायमानप्रवर्तकत्वं कालस्य तथैवाङ्गभावात् एवं सति पर्यवसितार्थमाह- तथा चेति, यथाश्रुते तु नाङ्गिकालस्याधिकारिविशेषणतानियमः पञ्चमहायज्ञादौ पञ्चमभागादेव तथात्वात्, अहर्मात्रस्यैव

आलोकः ।

मासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र नेष्टौ सोमपूर्वकालत्वविधिरपि तु लक्षितलक्षणया इष्ट्युत्तरत्वविधिरेव क्त्वाप्रत्ययेन सोमे क्रियत-इति प्राभाकरा अपि वदन्ति। अस्तु वाऽऽरम्भणीयावदारब्धचिकीर्षा-कालोऽधिकारिविशेषणं तथापि तस्य सुनिश्चेयतया तत्त्वसंमते प्राधान्येन तत्समयान्तरविधिरित्यधिकं गौरवम् । नचाङ्गत्वेपि तत्तुल्यं, प्रधानकालेनैवाकाङ्क्षाशान्तेः । किंतु क्रमाकाङ्क्षामात्रं सापि प्रति-

आलोकदर्पणः ।

क्वचित्तु तथा पाठ एव । लक्षितेति । गुरुमते समानकर्तृकत्वं क्त्वावाच्यं तदधिकरणावधिकमुत्तरकालीनत्वं लक्ष्यम् । न्यायमतानुसारेण तु क्त्वाप्रत्ययस्य पूर्वकालीनत्वं शक्यं तदधिकरणावधिकमुत्तरकालीनत्वं लक्ष्यमिति परम्परासम्बन्धेन लक्षणैव लक्षितलक्षणेत्यर्थः । एवं सत्यारम्भणीयादौ का गतिरित्यनुशयादाह-अस्तु वेति । प्रधानकालेनैवेति । प्रधानकालसन्निहितकालेनैवेत्यर्थः । क्रमाकाङ्क्षामात्रमिति । प्रधानकालसन्निहितः कालः पूर्व उत्तरो

आलोककण्टकोद्धारः ।

तत्र तथात्वात् अत एव नित्ये यत् किंचिदङ्गहानेप्यवैगुण्यादपकृष्य करणमपीत्यसंगत्यापत्तेरिति ध्येयम् । लक्षितलक्षणयेति । अत्र शक्यपरम्परासम्बन्ध एव लक्षितलक्षणा न तु तत्र पदगर्भत्वापेक्षा । अत एव न दर्शेन विना श्राद्धमित्यत्र दर्शशब्देन दर्शश्राद्धेतिकर्तव्यतोच्यते लक्षितलक्षणापत्तेरिति श्रीदत्तः । तथा च सोमप्रागभावावच्छिन्नकालः क्त्वः शक्यः तदाधेया चेष्टिः तत्प्रतियोगिकध्वंसाधारस्तादृशसमयध्वंसाधारो वा सोमसमयानुत्तरकालत्वेन लक्ष्यत इति स्फुटः परम्परासम्बन्धः यद्वा तन्मते न कालः शक्यः किन्तु समानकर्तृकतामात्रमतः पूर्वकालं लक्षित्वा तद्वारोत्तरः कालो लक्ष्यत

आलोकः ।

बन्धकध्वंसद्वारकत्वेनाङ्गत्वे ज्ञाते पूर्वकाल एव प्रयोजनसत्त्वेनार्थ-क्रमन्यायादेव शान्तेति न तद्बोधकविध्यन्तरापेक्षेति सर्वं सुस्थम् ।
परिशेषानुमानेन–इतराफलकत्वे सति सफलत्वानुमानेन । न च गौरवेण सफलत्वानुमितौ स्वर्गविषयत्वेऽपि न स्वर्गफलकत्वाभाव-सिद्धिः तत्कुतो हेतुसिद्धिरिति वाच्यम्, स्वर्गो न मङ्गलफलं समा-

आलोकदर्पणः

वेत्याज्ञामात्रमित्यर्थः । अर्थेति । अग्निहोत्रं जुहोति,यवागूं पचतीत्यत्र यथा यवागूपाकस्य पूर्वत्वं दृष्टप्रयोजनानुरोधात्तथेहापीत्यर्थः । स्वर्ग इति । समानवित्तिवेद्यतया चात्र स्वर्गफलकत्वाभावो मङ्गल-गतः सिध्यतीति हृदयम् । यद्यप्येवमपि ग्रामादिफलकत्वाभावः पूर्वं साधित इदानीं स्वर्गफलकत्वाभाव इति विशेषाभावद्वयसिद्‍ध्या-वपि समाप्तीतरफलकत्वसामान्याभावो न सिद्‍धस्तथापि विशेषा-भावद्वयेन सामान्याभावोऽपि साधनीयः विशेषाभावद्वयस्यैव वा हेतुप्रवेश इति भावः । ननु समानवित्तिवेद्यता नात्र सम्भवति

आलोककण्टकोद्धारः ।

इत्यर्थः । आर्थक्रमेति । यवागूपाकवत् प्रयोजनपूर्वभावात् प्रयो-जनिपूर्वभाव इत्यर्थः । वस्तुतः स्वर्गार्थत्वे मङ्गलस्य प्रतिप्रधान-मावृत्तिः विघ्नज्ञानानुविधानं तत्समसंख्यत्वादेव नोपद्यतेति द्रष्टव्यम् । इतराफलक इति । इदं तु प्रचयो न प्रथमादिमङ्गलफलमिति मतेन । अत एव न्यायमहार्णवे अन्ते च मङ्गलव्यवहाराविघ्नार्था-नुमितिचरममङ्गलस्यैव समाप्त्याद्यहेतुत्वेन प्रचयफलत्वमुक्तं न त्वाद्यमध्यमयोरिति । एवं च कृतमङ्गलेनेत्याचार्यग्रन्थे कर्मधारयो बोध्यः । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्या-

आलोकः ।

त्यपेक्षया गुरुत्वादिति गौरवलिङ्गत्वे तात्पर्यात् । वस्तुतस्तु समाप्तिमात्रफलकत्वे लाघवमन्यफलकत्वे गौरवमिति लाघवप्रतिसंधाने तत्प्रतिसंधानोपनीतं समाप्तिमात्रफलकत्वमेव सफलत्वानुमितौ विषय इति युक्तः परिशेषः । अत एव लाघवज्ञानं लघुविषयकज्ञाने सहकारीत्युच्यते यथा चैतत्तथा वक्ष्यते । व्यभिचारेण—व्यतिरेक-

आलोकदर्पणः

अनुमाने व्यापकतावच्छेदकावच्छिन्नस्यैव विषयत्वादित्यनुशयादाह-वस्तुत इति । अत्र वदन्ति एवं परिशेषानुमानं व्यर्थं स्यात् समाप्तीतराफलकत्वे सति समाप्तिफलकत्वमेव हि समाप्तिमात्रफलकत्वं तथा च तत्र लाघवावतारे समाप्तिफलकत्वस्य लाघवादेव सिद्धत्वादिति मैवम् समाप्तीतराफलकत्वांशमात्रे लाघवज्ञानदशायां परिशेषानुमानस्य सावकाशत्वादिति । ननु लाघवोपनीतस्य न

आलोककण्टकोद्धारः ।

युष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति महाभाष्यकारववचनं तु मतान्तरम् । वस्तुत इति । नन्वेवं सामान्यतोदृष्टेनैवेष्टसिद्धौ किं परिशेषेण न च यन्मतेन लाघवोपनीतस्य प्रकारता तन्मते तदपेक्षा हेतुसिद्धिश्च सामान्यतोदृष्टावतारे मनसैवेति वाच्यम् सफलत्वानुमितौ विषय इति दर्शनात् प्रकारान्तरेण विषयत्वासंभवात् । उच्यते, समाप्तिमात्रफलकत्वं समाप्त्यन्यफलाभावे सति फलवत्त्वं लघुतया ज्ञातम् । तथा च समाप्त्यन्यफलाभावत्वेन हेतुतावच्छेदकरूपेण सिद्धेर्नान्तरानुमानापेक्षा । समाप्तित्वप्रकारकज्ञानार्थं च परिशेषापेक्षेपि-यदा त्वन्याफलकत्वे सति समाप्तिफलकत्व एव लाघवज्ञानं तदेतरबाधकसहितं सामान्यतोदृष्टमेव परिशेषपदार्थः । परिशिष्यतेऽनेनेति व्युत्पत्तेः । व्यभिचारेणाभावादिति । उभयत्र मूले ज्ञानपदाध्याहारः ।

**तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानम् । न च व्यभिचारः, निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि**

आलोकः ।

व्यभिचारेण तथा च बाध इति भावः । यद्यप्यत्र व्यभिचारनिश्चयो नास्त्येव, तत्संशयश्च न विरोधी, प्रत्युत संदिग्धे न्यायप्रवृत्तेरनुगुण एव अन्यथा वेदोऽपि मूकः स्यात्, अयोग्यतासंशयात्तस्य चेदनुकूलत्वमिहापि तुल्यम्, तथाप्यन्धपरंपरापातमात्रभिया प्रकारान्तरोपादानम् । अत एव श्रुत्यनुमानाभ्यामित्यग्रे तत्रापि संमतिमाहेति ।

आलोकदर्पणः ।

प्रकारत्वमित्यत आह तथा चेति । तथापीति । स्वतन्त्रप्रमाणामूलकत्वेन विश्वासानास्पदत्वमेवानुमाने दोष इत्यर्थः । प्रमत्तनास्तिकसमाप्तिस्थले मानाभावेन मङ्गलव्यतिरेकनिश्चयाद्व्यभिचारनिश्चय एवेत्यभिमानाद्व्यभिचारेणेत्यादिकमूलमित्येके ।

यद्यपि प्रमत्तानुष्ठितसमाप्तिस्थले व्यभिचारज्ञानवतः पुरुषस्य तदानीं प्रत्यक्षादितो मङ्गले समाप्तिकारणत्वस्य प्रत्येतुमशक्यत्वेऽपि पुरुषान्तरस्य तस्यैव पुरुषस्य च कालान्तरे मङ्गले समाप्तिकारणत्वप्रत्यक्षानुमानसंभवात् प्रत्यक्षानुमानमपि तत्र प्रमाणम् तथापि प्रौढिवादेन तादृशपुरुषस्यापि तस्मिन्काले समाप्तिकारणत्वग्रहमुपपादयितुमाह—**तथापीति** । **तथाविधशिष्टाचारानुमितेति** । अविगीतशिष्टाचारानुमितेत्यर्थः । **मानम्**—तस्य पुरुषस्य तदानीं प्रमाजनकम् । **न** चानुमितवेदस्य आनुपूर्वीविशेषानिश्चयात्कथमर्थप्रत्यायकत्वमिति वाच्यम् विनाप्यानुपूर्वीज्ञानं तदर्थबोधकत्वेन ज्ञातादेव शब्दा-

**तथैव लिङ्गेन जन्मान्तरीयतदनुमानात् । तच्चेदमारब्ध-कर्माङ्गं कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् फला-**

दर्थबोधसंभवात् । श्रुत्यनुमानं च नमस्कारादिकं वेदबोधितसमाप्तिसाधन-ताकं समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वात् इत्येवंरूपम् । दर्शादौ व्यभि-चारवारणाय हेतौ समाप्त्युद्देश्यकेति, तथाच यो यदुद्देश्यकाविगीतशिष्टाचार-विषयः स वेदबोधिततत्साधनाताकः इति सामान्यतोमुखी व्याप्तिः, शिष्टकृते निष्फले चैत्यवन्दनादौ व्यभिचारवारणायाविगीतेति, अविगीतत्वं च वेदानि-षिद्धाविषयकत्वम् । पशुकृतवृथाचेष्टायां व्यभिचारवारणाय शिष्टेति, शिष्टत्वं च बालकपतितान्त्यजातिरिक्तत्वे सति वेदप्रामाण्यनिश्चयविशिष्टत्वम् । वेद-प्रामाण्याभ्युपगन्तुर्भोजनादौ व्यभिचारवारणाय अलौकिकत्वे सतीति हेतुदले पूरणीयम् । अलौकिकत्वं च लोकावगतेष्टसाधनान्यत्वम् । **न च व्यभिचार-इति** । प्रमत्तानुष्ठितसमाप्ताविति शेषः । तथा च विषयबाधेन वेदजज्ञानस्य भ्रमतया न वेदस्य तत्र प्रामाण्यसंभव इति भावः । **निष्परिपन्थीति** । बाधसंशयतन्निश्चययोः न शाब्दबोधप्रतिबन्धकत्वमिति भवति श्रुत्या मङ्गले समाप्तिसाधनत्वनिश्चय इति भावः । **तत्रापि**—नास्तिकसमाप्तावपि, **तथैव**—समाप्त्यैव, **तदनुमानात्**—प्रमत्तानुष्ठितसमाप्तिर्मङ्गलजन्या समाप्तित्वात् शिष्टानुष्ठितसमाप्तिवदित्येवंरूपात्, तथा च तत्रापि मङ्गलस्य प्रमाणसिद्धत्वान्न व्यभिचार इति भावः । प्रकृते चरमवर्णपर्यन्तवर्णसमूहरूपो ग्रन्थ एवारब्धं कर्म तज्जन्या च चरमवर्णध्वंसरूपा समाप्तिस्तज्जनकत्वं चारब्धकर्मभिन्ने मङ्गले आरब्धकर्माङ्गत्वं एतावता प्रबन्धेन यद्यपि सिद्धं तथाप्यारब्धकर्माङ्गत्वत्वेन रूपेणारब्धकर्माङ्गत्वं न सिद्धमिति प्रसङ्गात्तदप्युपपादयति—**तच्चेति** । मङ्गलं

**न्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च दर्शे प्रयाजादिवत् । आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्वबोधनात् तत्फलकत्वबोधनाच्च । दर्शारम्भसमये नियमेन क्रियमाणाया अप्यारम्भणीयायास्तदर्थितया अक्रियमाणत्वात् फलान्तरश्रवणाच्च प्रधानत्वमिति न तया व्यभिचारः ।**

चेत्यर्थः । **आरब्धकर्माङ्गम्**—आरब्धकर्मभिन्नत्वे सति आरब्धकर्मजन्यफलजनकम् । **कर्मार्थितया** आरब्धकर्मजन्यफलेच्छयेत्यर्थः नत्वारब्धकर्मनिष्पत्तीच्छेयेत्यर्थः प्रयाजस्य दर्शानिष्पादकत्वेन दर्शे प्रयाजवदिति दृष्टान्तासङ्गतेः । **तत्पूर्वम्**—आरब्धकर्मपूर्वम् । हेत्वन्तरमाह—**फलान्तराभावे सतीति** । दर्शप्राक्क्रियमाणारम्भणीयेष्टौ व्यभिचारवारणाय सत्यन्तम् । नियमतो निष्फले चैत्यवन्दनादितः प्राक्क्रियामाणे केशोल्लुञ्चनादौ न तदङ्गत्वमिति तत्र व्यभिचारवारणाय तत्पूर्वमित्यत्र तत्पदार्थस्य फलवत्त्वविशेषणलाभार्थं फलवत्कर्मारिप्समानेनेति । प्रधानत्वाभिमतपूर्वं कदाचित्क्रियमाणे निष्फले कर्मणि व्यभिचारवारणाय नियमत इति । प्रधानकर्मणि व्यभिचारवारणाय तत्पूर्वमिति । तदर्थितयेत्यनेन-प्रथमहेतौ कर्मार्थितयेति विशेषणस्य, तत्फलमात्रफलकत्वबोधनादित्यर्थकेन तत्फलबोधकत्वादित्यनेन-द्वितीयहेतौ फलान्तराभावे सतीति विशेषणस्य, चासिद्धिः परिहृता । उभयहेतौ प्रथमविशेषणस्य प्रयोजनमाह—**दर्शारम्भेति** । "आग्नेयमष्टाकपालं चरुं निर्वपेत् दर्शपूर्णमासावारिप्समानः" इति श्रुतिबलेन दर्शपूर्णमासपूर्वकाले आरम्भणीयेष्टेः क्रियमाणत्वं न तु तदर्थितया नवा फलान्तराभाव इति भावः ।

प्रगल्भी ।

**तथाविधेति** । आरब्धत्वाभिमतसमाप्तिकामशिष्टाचारानुमिता श्रुतिरित्यर्थः । श्रुत्यनुमानं चेत्थम् । मङ्गलं वेदमूलकम् अलौकिका-विगीतशिष्टाचारविषयत्वात् दर्शवत् । शिष्टत्वं चात्र प्रकृतेष्टसाधनतांशे भ्रमरहितत्वम् । तद्ग्रहोपायः प्रागुक्तः निष्फले कर्मणि व्यभिचार-वारणाय तदुपात्तम् । अविगीतविशेषणोपादानम् अगम्यागमनादौ व्यभिचारवारणाय । अलौकिकविषयत्वं च विशेषणं भोजनादौ व्यभिचारवारणाय । ननु अविगीतपदवैयर्थ्यम् अगम्यागमनादे-र्लौकिकत्वादिति चेत् न अन्वयव्यतिरेकादिप्रमापितबलवदनिष्टाननु-बन्धीष्टसाधनत्वराहित्यस्यालौकिकशब्देनाभिधानात् अगम्यागमना-दौ तत्सत्त्वात् । तत्र व्यभिचारवारणाय तस्य सार्थकत्वादिति यत्तन्न अलौकिकशब्दर्थान्तर्गतबलवदनिष्टाननुबन्धित्वभागस्याविगीतत्वस्य च व्यर्थत्वात् तदुभयं विनापि व्याप्तिग्रहसम्भवात् । किञ्चानिषिद्ध-बहुतरदुखानुविद्धसुखसाधने उक्तरूपालौकिकत्ववति कर्मणि व्यभि-चारः तस्माच्छब्दतदुपजीविप्रमाणातिरिक्तप्रमाणबोधितेष्टसाधनता-कत्वं लौकिकत्वम् । तद्राहित्यम् अलौकिकत्वम् । साध्यत्वं वेदबो-धितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वमुक्तम् । तथा च श्येनया-गादौ निषद्धे व्यभिचारवारणाय अविगीतेति । साध्ये च तादृशं विशेषणमुद्देश्यसिद्ध्यर्थमुक्तम् । ननु नमस्कारादिः सफलं शिष्टका-र्यत्वादित्यनेन सामान्याकारेण मङ्गलस्य समाप्तिसाधनत्वग्रहादुक्ता-लौकिकत्वमिति चेत् वेदबोधितेष्टसाधनताविषयकप्रमाणातिरिक्त प्रमाणबोधितेष्टसाधनताकत्वरहितत्वस्यालौकिकत्वस्य विवक्षितत्वा-

प्रगल्भी ।

दक्षतेः तस्या अपि कारणताया वेदबोधितत्वेन तत्प्रमाणस्य तद्विष-यातिरिक्तत्वाभावादिति । यद्वा शब्दतदुपजीविप्रमाणातिरिक्तप्रमा-णेन येन रूपेण यस्यार्थस्य कार्यकारणभावो बोधितस्तद्भिन्नेन हि रूपेणार्थविषयत्वमलौकिकत्वम् तच्चाचारविशेषणम् । नन्वेवमपि मङ्गलमूलभूतो वेदः सिद्ध्यति न तु समाप्तिफलकत्वबोधको वेदः— न च तादृशवेदमूलकत्वमेव साध्यं, तेन सह दर्शादौ व्याप्त्यभावात् वेदस्य विशेषरूपेण ज्ञानासम्भवाच्चेति चेत् समाप्तिकामनया शिष्टा-चारविषयस्य मङ्गलस्य मूलत्वेन वेदः सिद्ध्यन्पक्षधर्मताबलेन तस्य समाप्तिफलकत्वबोधक एव सिद्ध्यति । अतादृशस्य तादृशमङ्गलमूल-त्वासम्भवात् । वेद इदानीमानुपूर्व्यादिविशेषवत्त्वेनाननुमितोऽन्व-यबोधको न भवति यद्यपि तथापि पूर्वं प्रत्यक्षतादशायां तद्बोधको वृत्तो यो वेदः स इदानीमनुमीयते । स्वतन्त्रप्रमाणमूलकत्वेनान्धपर-म्परावारणायेत्यादिशब्दखण्डे बोध्यम् । नचेति तथा च न बोध्य-कारणत्वबाध इति भावः । निष्परिपन्थीति । प्रमत्ताद्यनुष्ठित समाप्तिस्थले जन्मान्तरीयमङ्गलसंशयेन योग्यतासंशयः न तु योग्य-ताभावनिश्चयः । स च ग्राह्यसंशयतया न परिपन्थीति भावः । ननु परिशेषानुमानमेव निष्परिपन्थीति चेत् न ग्राह्यसंशयतया परिशेषा-नुमानेऽस्य दोषत्वाभावेऽपि व्याप्तिनिश्चयपूर्वदशायां व्यभिचार-संशयतया दोषत्वेन प्रथमानुमानविघटनेन तदुपजीवकपरिशेषानुमा-नविघटनात् तदुपक्षणात् । नच श्रुत्या कारणत्वबोधनमशक्यं लोका-वगतकारणेनान्यथासिद्धत्वादिति वाच्यम् । अन्यथासिद्धिसंशयसत्त्वं

प्रगल्भी ।

न तु तन्निश्चय इत्यभिप्रायात् । **तथैवेति** । विघ्नस्थलीयसमष्टये-त्यर्थः । **तच्चेदमिति** । अत्र वदन्ति–ग्रन्थादिसमाप्तिरूपफलजनका-वान्तरवाक्यरचनादिरूपकर्माङ्गम् इति पक्षधर्मताबलात्पर्यवसितोऽर्थः न तु ग्रन्थादिसमाप्त्यङ्गमित्यर्थः । नहि फलं प्रत्यङ्गत्वं किन्तु करणं प्रति । ननु ग्रन्थस्य समाप्तिजनकत्वमुच्यते नावान्तरवाक्यस्येति चेत् तस्यास्तात्पर्यविषयीभूतैकार्थप्रतिपादकवाक्यफलावान्तर्गतचरम-वर्णोत्पत्तिरूपत्वात् अवान्तरवाक्यजन्यत्वं सा च यद्यप्याद्यक्षणसम्ब-न्धरूपतया न वाक्यजन्या तथाप्युत्पद्यमानचरमवर्णस्यैव समाप्ति-त्वात् । मङ्गलजन्यावान्तरपूर्ववाक्यप्रयोज्यतया तज्जन्यत्वव्यपदेशो न तु तज्जन्यतया । ननु समाप्तिरूपफलश्रवणात्कथमङ्गतेति चेत् समाप्तेस्तत्रोत्पद्यमानचरमवर्णरूपतया प्रधानशरीरनिविष्टत्वात् प्रधान-निर्वाहकत्वेनास्याङ्गत्वात् । तस्याश्चातिरिक्ततापक्षेऽपि प्रधानतत्फला-तिरिक्तफलाभाववत्त्वेनाङ्गत्वाविरोधात् । न च प्रचयाख्यफलसत्त्वा-द्दोष इति वाच्यम् अधिकाररूपकामनविषयस्य फलत्वेनात्रोक्तत्वात्, न हि प्रचयकामनाधिकारस्तस्यापि ग्रन्थफलत्वाद्वा । **कर्मार्थित-येति** । कर्मस्वरूपनिष्पत्त्युद्देश्यतयेत्यर्थः । **शिष्टैरिति** । भ्रम-रहितैरित्यर्थः । इदं च भ्रान्तेनाङ्गत्वभ्रमेण प्रधानकर्मार्थितया क्रिय-माणे मङ्गलभूते कर्मणि व्यभिचारवारणाय प्रधानं कर्मफलोद्देश्य-तयापि क्रियमाणे निष्पन्नं न फलायालमिति तन्निष्पत्त्युद्देश्यतया शिष्टेन तत्क्रियत इति तत्र प्रधानकर्मणि व्यभिचारो माभूदत आह **तत्पूर्वकमिति** । ननु करणात्मकस्य दर्शादेः प्रधानस्य प्रथम-

प्रगल्भी ।

करणभागे व्यभिचारस्तस्यापि द्वितीयादिकरणात्मकप्रधानपूर्वं क्रियमाणत्वादिति चेन्न उद्देश्यफलसाधनतावच्छेदकावच्छिन्नप्रतियोगिकपूर्वत्वस्य विवक्षितत्वादुक्ते तादृशपूर्वं क्रियमाणत्वाभावात् । दर्शादौ हि द्वितीयादिक्रमात्रमन्तर्भाव्य न फलसाधनत्वविश्रान्तिः । किन्तु समुच्चित इति तत्र न व्यभिचारः । यत्तु तत्पूर्वमित्यनेन प्रधानकरणकालान्यकालस्य विवक्षितत्वान्न दोष इति तच्चिन्त्यम् । प्रथमं मङ्गलस्य प्रधानत्वविवादे तादृशकालान्यकाले क्रियमाणत्वस्य सन्दिग्धत्वात । ननु घटाद्यर्थितया क्रियमाणकपालदण्डादौ व्यभिचारः, नहि दण्डादि तदङ्गमिति चेद् न वेदबोधिताङ्गत्वाभावेऽपि लौकिकाङ्गत्वाविरोधात । अत एव दर्शाद्यर्थं दध्यानयनादौ न व्यभिचारः । नचाङ्गाङ्गे व्यभिचारः, तत्र तदर्थितया क्रियमाणत्वाभावात भावे वाङ्गत्वसत्त्वात । फलान्तरेति । प्रधानत्वेन यदभिमतं कर्म तत्फलत्वेन यदभिमतं तदन्यफलाभाव इत्यर्थः । यद्यपि प्रचयरूपफलं मङ्गलस्यास्ति तथाप्यधिकाररूपकामनाविषयफलस्यात्र विवक्षितत्वान्न दोषस्तस्य प्रधानफलत्वाद्वा । चैत्यवन्दनादिनिष्फलकर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणेऽङ्गत्वाभिमते कर्मणि व्यभिचारवारणायोक्तं फलवदिति । नच तत्त्राङ्गमेव फलवत्सन्निधावफलं तदङ्गमित्यादिना फलवत्कर्मान्वितस्यैवाफलस्याङ्गत्वव्यवस्थापनात् प्रधानत्वाभिमतपूर्वं कदाचित् कथं चित्कृते निष्फले कर्मणि व्यभिचारवारणायाह-नियमत इति । प्रधानकर्मण्येव व्यभिचारवारणाय तत्पूर्वमिति। नच तत्र कर्मारिप्समानस्य कार्यं किन्तु कर्म

प्रथमभी ।

कुर्वाणस्यातो न तत्र व्यभिचार इति वाच्यम् । कर्मारिप्समानेनेत्यस्य कर्म चिकीर्षतेत्यर्थत्वेन तत्र कर्मारिप्समानेन क्रियमाणत्वस्य सत्त्वात् । एतस्य मते मङ्गलमात्रे ऐहिकामुष्मिकसाधारणे फलवत्कर्मचिकीर्षता क्रियमाणत्वमस्त्यतो न जन्मान्तरीयमङ्गले भागासिद्धिः । नच दर्शार्थे दध्यानयनादौ व्यभिचारः । तस्याप्यङ्गत्वात् । नच प्रधानत्वाभिमतफलत्वेन यदभिमतं तदन्यफलाभावे सतीत्यर्थे ऽभिमतपदद्वयार्थवैयर्थ्यम्, तथा सति प्रधानफलातिरिक्तफलाभावे सतीत्यर्थे फलवत्पदवैयर्थ्यं च, चैत्यवन्दनादेः फलवत्त्वाभावान्नियमतस्तत्पूर्वं क्रियमाणे व्यभिचाराभावादितिवाच्यम् । उद्देश्यफलातिरिक्तफलाभावे सतीत्यर्थात्सत्यन्तभागस्य चैत्यवन्दनस्य निष्फलत्वेऽपि उद्देश्यफलस्यान्यत्र प्रसिद्धत्वात् । अन्यथा तत्रेच्छायामसद्विषयत्वापातादिति वयम् । नचारब्धकर्मणः प्रकृते वाक्यरूपस्य चरमवर्णोत्पत्तिरूपा समाप्तिः कथं फलं तत्र दूरविनष्टानां विजातीयानामहेतुत्वादिति वाच्यम् । प्रथमानुमानसमये उक्तोत्तरत्वादिति । हेत्वोर्विशेषणासिद्धी परिहरति–आचारेत्यादिना।श्रुत्यनुमानाभ्यामिति । वादिभेदेनोभयांदर्शितम् । अन्ये त्वनुमानमेव प्रमाणत्वेनाभिमतं तस्य स्वतन्त्रप्रमाणमूलकत्वोपदर्शनाय श्रुतेरुपादानम् इदानीमनुमितायास्तस्या अर्थाप्रतिपादकत्वादिति भवत्फलाभ्यां तत्कर्त्तव्यताबोधनमिति वदन्ति । तत्फलकत्वबोधनात्समाप्तिफलकत्वबोधनादित्यर्थः । ग्रन्थादिरूपफलकत्वबोधनादित्यर्थ इत्यन्ये । हेत्वोः प्रथमविशेषणप्रयोजनं दर्शयति दर्शेत्यादिना ।

आलोकः ।

तथाविधेति । अलौकिकाविगीतनिर्विघ्नसमाप्तिकामशिष्टाचारानुमितेत्यर्थः । अलौकिकत्वं च लोकावगतबलवदनिष्टाननुबन्धी-

आलोकदर्पणः ।

अलौकिकेति । अत्र वेदबोधितबलवदनिष्टानुबन्धीष्टसाधनताकत्वे साध्ये नान्धपरम्पराशङ्कानिरासः वेदबोधितबलवदनिष्टाननुबन्धित्वसमानाधिकरणनिर्विघ्नसमाप्तिरूपेष्टसाधनताकत्वे साध्ये दर्शादौ व्यभिचारशङ्कया सामान्यरूपेणापि निर्विघ्नसमाप्तिकामशिष्टाचारस्यैव हेतुत्वात् पक्षधर्मताबलान्निर्विघ्नसमाप्तिसाधनताबोधक एव वेदः सिध्यतीत्याशयेन हेतावप्रविष्टमपि निर्विघ्नेत्यादिविशेषणमुक्तम् । अत्र च लोकप्रमाणप्रमापितबलवदनिष्टानुबन्धीष्टसाधनताकभिन्नत्वमलौकिकत्वम्, इष्टसाधनतांशभ्रमरहितत्वं शिष्टत्वम्, वेदानिषिद्धत्वमविगीतत्वम्, भोजनादौ जलताडनादौ अगम्यागमनादौ च व्यभिचारवारणाय । वैधरागजप्रसक्त्यभावेनाविगीततया निष्फलजलताडनादौ शिष्टपदं विना वारणासंभ-

आलोककण्टकोद्धारः ।

तथाविधपदेन पूर्वहेतुपरामर्शात् तेनालौकिकपदसहितेन श्रुत्यानुमानेऽपि न ततः समाप्तिसाधनत्वसिद्धिरित्याचारं विशिनष्टि-निर्विघ्नसमाप्तिकामेति । अत्रैवं सति दृष्टान्तालाभात् प्राङ्नास्तितानुमानादाविव सामान्यव्याप्तेर्गमकत्वं व्यतिरेकित्वं वाभिमतम् । भोजनादिवारणार्थमलौकिकपदं तस्य च लोकप्रमापितत्वगर्भस्यागम्यागमनेऽपि सत्त्वात्तद्वारणार्थमविगीतपदम्, अप्रसङ्गादनिषिद्धनिष्फलवारणार्थं शिष्टपदमिष्टोपायतांशभ्रमरहितपरमित्युपाध्यायव्याख्यानं दूषयति-नत्विति । सविषान्नेति । न चानिष्टाननुबन्धित्वं नरकाननु-

आलोकः ।

ष्टसाधनताकाऽन्यत्वं न तु प्रमापितत्वान्तर्भावः सविषान्नभोजनेऽनैका-

आलोकदर्पणः ।

वादिति व्याख्यानं दूषयति—नत्विति । सविषान्नभोजने-प्रमादकृत-मधुविषसंपृक्तान्नभोजने, ज्ञानकृते विगानात् भ्रमकृतदूरस्थसरोवगाहनादिकं चात्रोदाहार्य्यम् । अत्र वदन्ति नरकाननुबन्धित्वसमानाधिकरणा लोकप्रमापिता इष्टसाधनता यस्य तद्भिन्नत्वमलौकिकत्वम् । तथा च प्रमादकृतमधुविषसंपृक्तान्नभक्षणदूरस्थसरोवगाहनयोरनेनैव वारणदागम्यागमनजलताडनयोश्चाविगीतशिष्टपदाभ्यां वारणात् सुस्थो हेतुः । यद्वा अविगीतपदेन बलवदनिष्टाननुबन्धित्वं विवक्षितं ततश्च तेनैवागम्यागमनमिव तदुभयमपि वार्यते इति तन्न—प्रथमपक्षे प्रमापितत्वान्तर्भाववैयर्थ्यात् । न च प्रमापितत्वानन्तर्भावेऽलौकिकपदेनैव निष्फलवारणाच्छिष्टपदं व्यर्थमिति वाच्यम् स्वर्गजनकत्वबुद्ध्या केनचित्कृते केवलेङ्गे व्युत्क्रमकृताश्वमेधादौ च व्यभिचारवारकत्वात् नरकाननुबन्धित्वभागोपि व्यर्थ एव । न चागम्यागमनवारकमविगीतपदं तददाने व्यर्थं स्यादिति वाच्यम्, श्येनवारकतया सार्थकत्वात् । न च वेदबोधितेष्टसाधनत्वमात्रमेव साध्यं तच्च श्येनेऽप्यस्तीति वाच्यम् , तथा सीति बलवदनिष्टाननुबन्धित्वांशे अन्धपरम्पराया अनिरासात् द्वितीयपक्षे च विगीतत्वं हि

आलोककण्टकोद्धारः ।

बन्धित्वमिति न दोष इतिवाच्यम्, नरकाजनकत्वस्य शब्दानुपजीविप्रमाणागम्यत्वात् । यद्यप्यविगीतत्वस्य बलवदनिष्टाजनकत्वार्थकत्वे तद्वारणं भवत्येव तथाप्यवगतत्वापेक्षया प्रमापितत्वं गुरुतरं विवक्षितत्वाऽविगीतपदस्यार्थान्तरमुभयथा अयुक्तमित्याशयः । किंच बलवत्त्व

आलोकः ।

न्यात् । न चागम्यागमने एवमपि न व्यभिचार इति वाच्यम्, रात्रिश्राद्धादौ व्यभिचारवारकत्वात्, एवं चाविगीतपदमनर्थकं न भवति । लोकपदं चादृष्टार्थकवाक्यातिरिक्तमानपरम् तेन चैत्यवन्दनाद्यपि

आलोकदर्पणः ।

वेदनिषिद्धत्वमिति ग्रन्थविरोधः, प्रमापितत्वांशवैयर्थ्यं च । एवमपि-लोकावगतेत्यादिविशेषणेनापि । न व्यभिचार इति । तथा चाविगीतपदं व्यर्थमितिशेषः । रात्रिश्राद्धादाविति । अतद्गुणसंविज्ञानबहुव्रीहिणा श्येनादावित्यर्थः । रात्रिश्राद्धस्य निष्फलतया शिष्टपदेनैव वारणात् । शिष्टपदेन-शिष्टपदेनैव । अलौकिकपदेन, शिष्टपदेनापि व्यभिचारवारणे व्यवच्छेदायोगात् । नन्वेवं जलताडनादेरलौकिकपदेनैव वारणात् शिष्टपदं व्यर्थमित्यत आह—लोकपदं चेति । अदृष्टार्थकेति ।

आलोककण्टकोद्धारः ।

मनिष्टेनानुगतम् । न च द्वेषविशेषात्मकं तत् रागान्धस्य मरणदुःखे द्वेषविशेषानुत्पाददशायां सविषान्ने अनेकान्ततादवस्थ्यात् अप्रसिद्धिवारणाय प्रवर्तमानपुरुषीयद्वेषस्य वाच्यत्वात् सफलानुमितौ तु साध्यस्यापि तद्गर्भत्वान्न दोष इत्यवधेयम् । एवमपीति । अवगमगर्भत्वेऽपीत्यर्थः । तथा चाविगीतत्वं व्यर्थमिति शेषः । रात्रीत्यत्राविगीतपदस्येति शेषः । उपसंहरति—एवं चेति । ननु बौद्धागममूलकचैत्यवन्दनस्यालौकिकपदेनैव वारणात् शिष्टपदं व्यर्थमत आह-लोकपदं चेति । अदृष्टार्थकत्वमदृष्टतात्पर्यकत्वम् । नन्वेवमलौकिकपदेन कृतकृत्यं शिष्टपदमत आह-शिष्टपदमिति । चैत्यवन्दनान्यतदागममूलकनिष्फलकर्मणीत्यर्थः । पूर्ववदभ्रान्तत्वपरं नतु वेदप्रमाण्याभ्युपगन्तृपरमि-

आलोकः ।

यदि बौद्धागमप्रामाण्यनिबन्धनप्रवृत्ति तदा शिष्टपदेन यदि जल-ताडनसाधारणं तदा अलौकिकपदेन वार्यते शिष्टपदं च पूर्ववन्नि-ष्फलकर्मण्यनैकान्तवारणार्थम् । यद्वा अलौकिकविषयत्वे ध्रुवे मा-

आलोकदर्पणः ।

तदुपजीवीत्यपि ज्ञेयम् अन्यथा स्वरूपासिद्ध्यापत्तेः । अदृष्टा-र्थकत्वं चादृष्टप्रतिपादकत्वमात्रं तैरपि क्षणिकोत्तरोत्तरसंस्कारक-पादृष्टाङ्गीकारात् । यद्वा शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्य-प्रमितिविषयार्थकं यत् तद्भिन्नत्वरूपं तत् तस्य च सार्थकवेदे, निरर्थकबौद्धागमे च सत्त्वात् अलौकिकपदेनैव चैत्यवन्दनवारणे पुनरपि शिष्टपदं व्यर्थमित्यत आह शिष्टपदमिति । निष्फलेति । अदृष्टार्थकप्रतारकवाक्यमूलके जलताडनादौ व्युत्क्रमकृताश्वमेधादौ चेत्यर्थः । नन्वेवं लोकावगतेष्टसाधनताकभिन्नत्वमेवालौकिकत्वमस्तु बलवदनिष्टानुबन्धित्वांशवैयर्थ्यादिति चेन्न लोकावगतबलवदनिष्टा-ननुबन्धिताकभिन्नत्वघटिते लोकावगतेष्टसाधनताकभिन्नत्वघटिते च हेतुद्वये तात्पर्यात् । यद्वेतदस्वरसादेवाह—यद्वेति ।

आलोककण्टकोद्धारः ।

त्यर्थः । अलौकिकपदव्यर्थतापत्तेः । नन्वेवं रात्रिश्राद्धादेः शिष्टपदे-नैव व्यावृत्तेरविगीतपदं व्यर्थमिति चेन्न श्येनादिविहितनिषिद्धव्यभि-चारवारकत्वात् वेदमूलकत्वेनानिष्टाननुबन्ध्यर्थकवेदमूलकत्वस्या-भिधानात् प्रवर्तकश्रुतेः प्रकृतत्वादिति ब्रूमः । तदनन्तर्भावेनाह-यद्वेति । अत्र शिष्टत्वमभ्रान्तत्वम् अन्यथा रात्रिश्राद्धे व्यभिचारा-दिति ध्येयम् । न चाविगीतत्वगर्भहेतौ बौद्धागममूलकनिष्फले अनेकान्तः लोकपदेनात्र वेदभिन्नप्रमाणस्याभिधानादिति भावः । ननु तथाविधपदेन पूर्वहेतुपरामर्शस्तत्र चालौकिकपदगन्धोऽपि

आलोकः।

ग्वादिहापि हेतुद्वयमेव शिष्टपदस्याभ्रान्तपरत्वे अलौकिकत्वं वेद-प्रामाण्याभ्युपगन्तृपरत्वेऽविगीतत्वमिति विवक्षाभेदेन हेतुद्वयम्, तदर्थस्तु पूर्वोक्त एवेति वस्तुगतिः, अतएव वेदानुमापकहेतौ

आलोकदर्पणः।

हेतुद्वयमिति—अलौकिकाभ्रान्ताचारविषयत्वम् अलौकिकबलवदनिष्टा-ननुबन्ध्याचारविषयत्वं चेत्यर्थः। शिष्टपदस्य श्येनादिवारणाय समस्ताभ्रान्तपरत्वात्। अविगीतपदस्य व्युत्क्रमकृताश्वमेधादिवार-णाय बलवदनिष्टाननुबन्धित्वपरत्वात्। अलौकिकपदं चोभयत्र लोकावगतेष्टसाधनताकभिन्नमात्रपरमतो न पूर्वोक्तदोषः। शिष्टपदं ध्रुवीकृत्याविगीतालौकिकपदयोर्वैकल्पिकोपादानं मनसि कृत्याह—शिष्टपदस्येति। यद्यपि अलौकिकाभ्रान्ताचारविषयत्वरूपो हेतुः पूर्वमेव व्याख्यात इति पौनरुक्त्यं तथापि वेदप्रामाण्येत्यादिद्वि-तीयहेतुमादाय भेदः। अविगीतत्वं च बलवनिष्टाननुबन्धित्वम् अतो न व्युत्क्रमकृताश्वमेधादौ व्यभिचारः। तदर्थः—वेदप्रामाण्येत्याद्यर्थः। पूर्ववत् भोजनादौ व्यभिचारवारणाय तदनभ्युपगमासम्भाविते-

आलोककण्टकोद्धारः।

नास्तीत्याशयेन शिष्टपदस्य वेदप्रमाण्याभ्युपगन्तृपरत्वेन तथैव हेतुरलौकिकपदस्य च प्राचां हेत्वन्तराभिप्रायेण प्रक्षेप इति हृदि निधायाह—शिष्टपदस्येति। न चाविगीतत्वगर्भहेतौ कल्पितव्रतादौ व्यभिचारः तस्य तद्वाक्यप्रामाण्याभ्युपगममात्रेणोपपत्तेः शिष्टपदेनैव वारणात्। न चैवं पक्षदृष्टान्तयोर्हेत्वलाभ, तदुभयमूलप्रमाणप्रामा-ण्याभ्युपगमस्यैव वेदप्रामाण्याभ्युपगमत्वात्। वेदप्रामाण्याभ्युपगम-पदेन तदर्थगोचरज्ञानप्रामाण्याभ्युपगमस्याभिधानात् न चेदं कल्पित

आलोकः ।

शिष्टपदं वेदप्रामाण्याभ्युपगन्तृपरमिति प्रकाशः । केचित्तु यादृशालौकिकाविगीतशिष्टाचारविषयो यत्तत्तादृशकर्तव्यत्वेन वेदविहितमिति सामान्यव्याप्त्यवधारणमित्यवश्यं शिष्टकर्तव्यतया वेदबोधित-

आलोकदर्पणः ।

त्याद्यर्थः । अतएव वेदेति पूर्वव्याख्याने शिष्टपदस्य वेदप्रामाण्याभ्युपगन्तृपरत्वाभावात्प्रकाशविरोध इति भावः । केचिदित्यत्र तुशब्दः पक्षधर्मताबलात् साध्यविशेषलाभ इति पूर्वोक्तपक्षव्यवच्छेदाय । यादृशेति—यत्कामेत्यर्थः । तादृशेति—बलवदनिष्टाननुबन्धित्वविशिष्टतत्कामकर्त्तव्यत्वेत्यर्थः । अवश्यमित्यनन्तरं समाप्तिकामेति शेषः । क्वचिद्विशिष्टेतिपाठस्तदा विशिष्टपदस्यैव समाप्तिकामार्थकत्वान्न शेषः । अत इति । सामान्यव्याप्त्यनुसरणादित्यर्थः । न व्यभिचार इति—दर्शादाविति शेषः । पक्षधर्मतावलादेव साध्यविशेषलाभ इति

आलोककण्टकोद्धारः ।

मते तस्यावेदार्थत्वादिति दिक् । ननूक्तकुसृष्ट्यपेक्षया शिष्टपदविनिर्मुक्तहेतुरेव तादृशशब्दार्थ इत्येव वरमित्याशङ्क्य तदन्तर्भावे ग्रन्थान्तरसंवादमाह—अत एवेति । शिष्टपदसार्थकत्वाय कस्यचिन्मतमाह—केचित्त्विति । यादृशेति यद्धर्मवदर्थकम्, यद्धर्मोऽपि ब्राह्मणत्वादिः । तेन शिष्टविशेषाचारविषयस्तादृशकर्तव्यत्वेन वेदबोध्य इति व्याप्त्याऽत्रापि शिष्टविशेषकर्तव्यत्वेन वेदबोध्य इति साध्यम् अतो न व्यभिचार इति विशिष्य साध्यकरणे हेतौ तद्विशेषानुपादानेऽशिष्टकर्तव्यतया वेदबोध्ये यो व्यभिचारः स हेतौ शिष्टपददानेन न भवतीत्यर्थः । अत्रारुचिबीजं यदेव शिष्टत्वं हेतुप्रविष्टं तदेव साध्ये प्रवेश्यं तच्च वेदप्रामाण्याभ्युपगन्तृत्वमभ्रान्तत्वं वा न च तदनभ्युपगन्तृकर्तव्यतया भ्रान्तकर्तव्यतया वा कर्मविहितं यत्र व्यभिचारः स्यात् नापि चातुर्व-

आलोकः।

मिति साध्यमतो न व्यभिचार इत्याहुः । तादृशपदस्वरसादुक्त एव हेतुरतो वेदमूलकत्वानुमानमात्रं फलविशेषानिश्चयश्च परिशेषादिति वयम्। न चेति । अयोग्यतासंशयो न विरोधी तन्निश्चयो नास्त्येवेति भावः । न चेदानीमानुपूर्वीविशेषविशिष्टानुमापकलिङ्गाभावात्तद्विशेषप्रत्ययाधीनत्वाच्च शाब्दप्रत्ययस्य कथं वेदाधीन-

आलोकदर्पणः।

यत्पूर्वमुक्तं तत्र तत्प्रकारकप्रतीत्यभावादनाश्वासो नापगच्छतीति तेषामाशयः। यत्तत्पदार्थगर्भसामान्यव्याप्तेर्व्यतिरेकपर्यवसानमेवेत्यस्वरसादाह–तादृशेति। तादृशं यत्पदं पूर्वोक्तहेतुपरामर्शकं तथाविधपदमित्यर्थः । यद्यपि तथाविधपदपरामर्शनीये पूर्वोक्तहेतावलौकिकत्वं नास्ति तथाप्यधिकमितिन्यायेन तथाविधत्वं वर्त्तत एवेति भावः। यद्यपि चैवं यत्कामेत्यस्य हेतौ प्रवेशेऽपि तथाविधत्वानपाय स्तथाप्यणुरपीति न्यायेनेदम्, शिष्टपदं ध्रुवीकृत्य अलौकिकत्वाघटितहेत्वभिप्रायेण वेदम् । अतः—उक्तहेतोः । नन्वेवं समाप्तित्वांशे वेदमूलकत्वाग्रहादनाश्वासो नापैतीति पूर्वोक्तं दूषणं तदवस्थमित्यत आह—फलेति—समाप्तिरूपेष्टेत्यर्थः । परिशेषादिति । मङ्गलं

आलोककण्टकोद्धारः।

णर्यापतितादिपरं शिष्टपदम, अतादृशैरपि मङ्गलाचारादिति द्रष्टव्यम् । तादृशपदस्वरसादिति । नन्विदमयुक्तं श्येनादिसाधारणवेदमूलकत्वानुमानमात्रस्यानुपयोगात् अन्धपरम्पराशङ्कानिरासस्याप्यधिकारिविशेषान्तर्भावेणोद्देश्यस्य फलविशेषान्तर्भावं विना असिद्धेः, मैवं वेदत्वमात्रस्य व्यापकतावच्छेदकत्वेऽपि समाप्तिकामाचारविषयमङ्गले पक्षधर्मताबलेन उक्तलाघवाच्चाभिमतसाधनताबोधकवेदसिद्धेरित्या

आलोकः ।

प्रत्ययादिदानींतनप्रवृत्तिरिति वाच्यम्,इदानीमिन्धपरम्पराशङ्कामात्र-निवर्तकत्वात्तदनुमानस्य यदा स वेदः प्रत्यक्षस्तदा आनुपूर्वीज्ञानमासी देव इदानीं तद्बोधकत्वेनानुमानादिति दिक् । तत्रापीति । इदं त्वनु मानसौकर्यादुक्तम, तदनुमानाभावेऽपि शब्देन तज्जनकताबोधने

आलोकदर्पणः ।

वेदबोधितवलवदनिष्टाननुवन्धिसमाप्तिफलकं समाप्तीतराफलकत्वे सति वेदवोधितवलवदनिष्टाननुबन्धीष्टसाधनताकत्वादित्यर्थः। अन्या-दृशपाठक्रमोऽत्र प्रामादिकः । अनुमानसौकर्यादिति । यद्यपि मङ्गलस्य समाप्तिपूर्वसत्त्वे सार्वत्रिके निर्णीते सिद्धसाधनमिति कथमनुमानसौकर्यं तथापि मङ्गलं समाप्तिनियतपूर्ववर्तीत्यवगमेऽपि प्रमत्तकृतमङ्गल इति विशेषतोऽनवगमदानुमानप्रवृत्तिरिति ध्येयम् । शब्देनेति । वेदरूप शब्दावच्छेदकतयानुमानेनेत्यर्थः शब्दस्येदानीमबोधकत्वात् । एव मग्रेऽपि । श्रुत्यनुमानाभ्यामित्यग्रेतनमूलस्थश्रुतिपदमप्येतत्परमेव । अथवानाश्वासवारकत्वमात्रेण सर्वत्र बोधकत्वनिर्देशः । यद्वा मीमां-सकमतेनेदं तन्मते तदर्थज्ञापकत्वज्ञानस्यैव शाब्दबोधप्रयोजक-तया अनुमितवेदादपि अन्वयबोधादिति । ननु विश्वजिन्न्यायेने-त्यत्र मङ्गलं यदि फलान्तररहितं स्यादङ्गं स्यात् यदि वाङ्गं स्यात्तदा

आलोककण्टकोद्धारः ।

शयः । इदानीमन्धपरम्परेति । नन्वेवं वेदं विनाप्यनुमानेन वेदार्थभा-नाच्छब्दतदुपजीवीत्यादिवेदलक्षणासिद्धिरितिचेन्मैवम् आचारमू-लज्ञानार्थं वेदस्योपजीव्यत्वात् स्मृत्यनुमेयवेदवत् तज्जन्यज्ञानस्यैवाबा-धितार्थज्ञानत्वेन परम्परयानुमानिकादिज्ञानप्रामाण्यप्रयोजकत्वादिति-

आलोकः ।

बाधकाभावात्। न च व्यभिचारज्ञानाभावार्थं तत्, शब्दादेव तद्भावादिति ध्येयम्। ननु मङ्गलमङ्गं यदि तदा अधिकार्यैक्यलाघवं तदेव कुत इत्यत आह—तच्चेदमिति । आरब्धकर्माङ्गम्—आरब्धकर्मसमानाधिकारिकम्, कर्मार्थितया—कर्मस्वरूपनिष्पत्त्यर्थितया कर्म

आलोकदर्पणः ।

एकाधिकारिकं स्यादिति लाघवमित्युक्तं तच्चायुक्तं फलान्तररहितत्वस्य प्रधानसाधारणत्वेनाङ्गत्वानापादकत्वादित्याशङ्कायां मूलमवतारयति। ननु मङ्गलमिति । कुत इत्यनन्तरं प्रतिसंधेयमिति शेषः। आहेति । तथा च फलवत्सन्निहितत्वादिविशेषणसहितस्याङ्गत्वप्रसञ्जकत्वान्नोक्तदोष इति भावः। केचित्प्रसङ्गसंगत्यानुमानपरं मूलमित्याहुः । आरब्धकर्माङ्गत्वम्-वान्तरवाक्यरचनादिरूपप्रधानकर्माङ्गत्वम् । आरब्धकर्माङ्गमित्यनन्तरं—तथाचेति शेषः। तेनारब्धकर्म-

आलोककण्टकोद्धारः ।

भावः। शब्दादेवेति। इदं तु यदि शब्दस्यावच्छेदकताबोधने सामर्थ्यं तदा अन्यथा संशयानास्कन्दनादिति। ननु मङ्गलमङ्गं यदीति प्रथमहेत्वभिप्रायेण,समानाधिकारिकमितिव्याख्यानं तु द्वितीयहेत्वभिप्रायेण तस्य प्रतिसंधानपरत्वात् तदर्थश्च प्रधानाधिकारित्वप्रयुक्ताधिकारिकत्वमतो न प्रधानवारणार्थोपात्ततत्पूर्वपदानर्थक्यम् अतोऽधिकार्यैक्यप्रयोजकाङ्गत्वसाधनायावतार्य समानाधिकारिकत्वव्याख्यानं न विरुध्यत इति ध्येयम्। यद्वा संभवतीतिपदमध्याहार्यं यत्तदोश्च व्यत्यासः तथाच समाप्तिफलकत्वेऽपि यदि अधिकार्यैक्यं संभवेत्तदेदं विनिगमकं भवेदतस्तत्साधयतीत्यर्थः। न चाङ्गताबोधकश्रुतिलिङ्गादिषट्काभावादत्र बाधः न्यायसिद्धार्थबोधकत्वेनोत्पन्नश्रुत्यनुमानादित्याशयः । आरब्धकर्माङ्गमिति । साध्यकर्मपदेनावान्तरवाक्यरचनादिप्रधा-

आलोककण्टकोद्धारः ।

नत्वेनाभिमतं तस्यैव चरमवर्णात्मकसमाप्तिफलकत्वात् । महावाक्यस्य तदजनकत्वात् । न च तद्ध्वंसः समाप्तिरकाम्यत्वात् । नचैवमखण्डगमनादिक्रियायां स्वरूपात्मिकैव समाप्तिर्वाच्या सा च कथं प्रधानफलमिति वाच्यम्, तत्र धात्वर्थावच्छेदकसंयोगादिक्रियाया एव समाप्तित्वात् तत्पर्यन्तेन क्रियासमाप्तिव्यवहारादिति प्रतिभाति । वस्तुतः समाप्तिः प्रारब्धकर्मात्मिकैव तत्रैव मङ्गलस्य प्रतिबन्धकनिवृत्तिद्वारा हेतुत्वेनावघातादिवत्सन्निपत्योपकारकाङ्गत्वं नतु प्रयाजादिवत् फलोपकारकाङ्गतया आरादुपकारकत्वम् अत एव समीहितक्रियास्वरूपप्रतिबन्धकं दुरितं विघ्न इति द्रव्यप्रकाशः । तदिदमाह—कर्मनिष्पत्तीति । प्रयाजादेरपि सातिशयकर्मनिष्पत्त्यर्थमेव करणमित्याशयः । न च स्वकारकनिष्ठोत्पत्त्याप्तिविकृतिसंस्कारात्मकोपकारचतुष्टयान्यतमद्वारैव प्रधानोपकारकस्य सन्निपातित्वं यथा पुरोडाशं संयौति पयो दोग्धि ब्रीहीनवहन्ति ब्रीहीन्प्रोक्षति इत्यादिषु मङ्गले च न तथेति वाच्यम् मङ्गलस्य दीक्षाव्रतवत् पापनाशात्मककर्तृसंस्कारहेतुत्वात् अत एवाविघ्नपरिसमाप्त्युपयोगितयाध्ययनस्वरूपोपयोगिनां व्रतनियमादीनां संनिपत्योपकारित्वमेव तमेनं विविदिषन्ति यज्ञेन दानेनेत्यादिना ज्ञाने विनियुक्तयज्ञादीनां सत्त्वशुद्धिद्वारकाणां ज्ञानं प्रतीति सिद्धान्तः । नन्वेवं प्रयाजादेरपि कर्तृनिष्ठापूर्वाधायकत्वेन सन्निपातित्वापत्तिः अपूर्वद्वारकप्रोक्षणवत् तस्माद्द्वितीयादिकारकविभक्त्यन्तपदोपात्तकारकनिष्ठोपकारकत्वं सन्निपातित्वं वाच्यम् यथा दीक्षाकर्तृगतं यद्यपि केशश्मश्रू वपते तीर्थे स्नातीत्यादि यजमानकर्तृकदीक्षाविधौ न कर्तरि कारकविभक्तिरस्ति प्रथमा तु प्रयाजादिविधिसाधारणी यजमानं दीक्षयतीत्याध्वर्यवविधौ द्वितीयाश्रवणादवघातवत्कर्मगतोपकारकतैवायाति तथाप्युत्पत्तिविधौ प्रथमानिर्देशाद्यजमानस्य कर्तृत्वं तदुत्पन्नस्नानादि

आलोकः ।

फलार्थितया वा, शिष्टैः-अभ्रान्तैः, तेन भ्रान्तैर्निष्फलकर्मप्राक्क्रियमाणे न व्यभिचारः । प्रधानस्यापि प्रधाननिष्पत्तीच्छया

आलोकदर्पणः ।

समानाधिकारिकमिति प्रयोजननिर्देशो न त्वारब्धकर्माङ्गत्वस्य व्याख्यानमन्यथा प्रधाने व्यभिचारवारणाय तत्पूर्वमित्यादि विशेषणं व्यर्थं स्यादित्यवधेयम् । आरम्भणीयादिवारणाय कर्मार्थितयेति विशेषणं तत्स्वरूपोपकारकत्वफलोपकारकत्वपक्षयोर्यथासंख्यं व्याचष्टे-कर्मेत्यादिना । अत्रावान्तरवाक्यरचनादिस्वरूपमेव विघ्नध्वंसद्वारा मङ्गलेन क्रियते यागस्वरूपमिवाघातादिद्वारा व्रीहिभिरिति स्वरूपोपकारत्वपक्षः चरमवर्णध्वंसात्मिका समाप्तिः कीर्त्यादिफलवती विघ्नध्वंसदिद्वारा मङ्गलेन क्रियते स्वर्गफलादिवत् परमापूर्वमङ्गापूर्वद्वारा प्रयाजेनेति फलोपकारकत्वपक्षः । तत्र च प्रथमकल्पे समाप्तिसाधनत्वप्रवादो विघ्नध्वंसद्वारा प्रधानकर्मजनकत्वे समाप्तिप्रयोजकत्वे च पर्यवसन्न इति ध्येयम् । निष्पत्तिः-स्व-

आलोककण्टकोद्धारः ।

क्रियारूपफलावच्छिन्नाध्वर्युव्यापारात्मकधात्वर्थविधायकेन दीक्षयतीत्यनेन संयोगविशिष्टप्रोक्षणवत् दीक्षाविशिष्टदीक्षकव्यापारस्य कर्मीभूतयजमानसाध्यकत्वावगमात् यथोक्तपरिभाषासंभवः अवघातः कर्मगतं प्रयाजशेषेण हवींष्यभिघारयतीत्यभिघारणं करणशेषगतम्, अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीत्याग्नीषोमीयाङ्गपशुपुरोडाशत्यागांशेन अदृष्टार्थेऽप्युद्देशांशेन प्रधानदेवताग्नीषोमरूपसंप्रदानगतं स्मरणरूपं त्यज्यमानोद्देश्यतामात्रस्यैव संप्रदानपदेनाभिधानात् यद्यप्यत्र न संप्रदानविभक्तिः तथापि विभक्तिपदेन तद्धितसाधारणं प्रत्ययमात्रमुच्यते अग्नेस्तृणान्यपचिनोतीत्यपादानगतं तप्ते पयसि दध्यानय-

आलोकः ।

क्रियमाणत्वाच्चत्पूर्वमिति विशेषणम्, तदर्थश्च तत्कालान्यकाल इति तच्छब्देन कर्मपरामर्शात् न च कर्मैकदेशे व्यभिचारः, फलजनकतावच्छेदकावच्छिन्नस्य कर्मत्वात् । न च कर्मैकदेशे तदिति

आलोकदर्पणः ।

रूपम् । विकाशितामेकान्योन्याभावघटितत्वादल्पासतां चाभिप्रेत्याह तदर्थ इति । कर्मपरामर्शान्न कर्मैकदेशे व्यभिचारः इत्ययुक्तं तथापि तत्र गतत्वादित्यत आह—फलेति । प्रधानतापर्याप्त्यधिकरणस्येत्यर्थः । चैत्येति । न च चैत्यवन्दनादेः फलासिद्ध्या प्रधानफलातिरिक्तफलाभावस्याप्यप्रसिद्ध्या कथं व्यभिचारशङ्केति वाच्यम्, प्रधानफलत्वाभिमतातिरिक्तफलाभावस्य तदर्थत्वात् । नियम इति । यद्यपि व्यक्तिविशेषे उक्तस्थलेऽपि नियमोऽस्त्येव सामान्यनियमस्तु मङ्गलेपि नास्ति नहि सर्वकर्मारम्भे मङ्गलं क्रियते एव तथापि कामनानुरोधेन निर्विघ्नसमाप्तेः फलतया तादृशकर्मारिप्सोः मङ्गलं नियतमेव । मङ्गलेन विना तत्कर्मणस्तत्फलासिद्धेरिति । वस्तुतः फलवत्कर्मारिप्समानस्य नियमो निश्चयोऽङ्गत्वनिश्चयोऽङ्गत्वभ्रमराहित्यमिति

आलोककण्टकोद्धारः ।

तीत्यधिकरणगतमुपकारमाधाय प्रधानोपकारकं संनिपात्यङ्गजातं न च मङ्गले तथास्तीशयेन प्रयाजादिदृष्टान्तानुरोधेनाराद्उपाकारकत्वमभिप्रेत्याह—कर्मफलेति । यद्यप्यङ्गं न प्रधानफलकामनया क्रियते किन्तु तदुपकारकामनया तथापि उपकारकामनापि प्रधानफलकामनाधीनैवेति न पक्षदृष्टान्तयोर्हेत्वसिद्धिरित्याशयः । ननु पूर्वत्वं प्रागभावावच्छिन्नत्वं तत्र प्रागिति व्यर्थं न च पूर्वाङ्गत्वस्य साध्यतया उत्तराङ्गवारणार्थं तत् मानाभावात् अन्त्यमङ्गले बाधा चचेत्यत आह— तदर्थश्चेति । अत्र विहितत्वमपि देयम् अतो न घटा-

आलोकः ।

भावः । फलान्तराभावे सतीति । फलान्तरवत्यारम्भणीया-
दावनैकान्तिकत्ववारणायफलान्तराभाव इति । चैत्यवन्दनादिनि-
यतपूर्वं क्रियमाणे व्यभिचारवारणाय फलवदिति । तद्धि न फल
वत्कर्मारिप्समानस्य कार्यं चैत्यवन्दनादीनामफलत्वात् । केनचित्स-
फलकर्म्मारम्भेच्छावता क्रियमाणेऽनङ्गे व्यभिचारवारणाय
नियमत इति । तद्धि तदिच्छावता नियमतो न क्रियते सर्वैर-

आलोककण्टकोद्धारः ।

दिपूर्वक्रियमाणदण्डादौ व्यभिचारः । वस्तुतः साध्यमपि लोकसा-
धारणमेव अङ्गत्वं 'कर्तुः समीहितं येन सिध्यत्यङ्गं तदुच्यते' इत्यस्य
साधारणलक्षणतया व्याख्यानात् न तु विहितत्वगर्भं वैदिकाङ्गत्व-
मित्यदोषः। नन्वङ्गाङ्गे व्यभिचारः-न च तस्य स्वप्रधानीभूताङ्गार्थितया
करणं नतु तत्प्रधानार्थितयेति वाच्यं प्रधानार्थिताया अधिकारिवि-
शेषणत्वाभावेऽप्यङ्गस्य प्रधानफलार्थितयैव तस्यापि प्रधानार्थि-
तया करणावश्यकत्वादिति चेत् न, तस्याप्यङ्गत्वात्, यत्तद्गर्भविशेष-
व्याप्तेरविवक्षणात् । न चैवं प्रधानवारकवैयर्थ्यं तस्यापि स्वफलाङ्ग-
त्वात् कर्तुः समीहितमित्युक्तलक्षणात् तथा च सूत्रं "कर्माण्यपि
जैमिनिः फलार्थत्वात्"इति वाच्यम्, फलाङ्गत्वेऽप्यारब्धकर्माङ्गत्वाभा-
वादिति भावः । अङ्गानङ्गत्वेन विशेषणादित्यन्ये । चैत्यवन्दनादीति ।
न च फलान्तरं प्रधानत्वाभिमतफलभिन्नं वाच्यं, तथा च चैत्यव-
न्दनादौ फलाभावादाद्यपदेनैव तद्वारणमिति वाच्यम्, प्रधानत्वाभि-
मतफलत्वाभिमतभिन्नस्य तदर्थत्वात् । न च प्रचयो न प्रधानफल-
मध्ययनादिरूपस्य तस्य तदजन्यत्वादित्यसिद्धिः तदफलत्वमत
एवायं ग्रन्थ इत्युक्तत्वात् । न च तत्र तदङ्गमेव फलवत्सन्निध्यश्रव-
णादित्याशयः । तद्धीति । ननु तद्व्यक्तौ नियमः तत्रापि तज्जातीये

आलोकः ।

**करणात । प्रधाने व्यभिचारवारणाय तत्पूर्वमिति । अत्र तच्छब्द आरब्धकर्मपरः । यदवच्छिन्नं कर्म आरब्धमिति यावत् । नन्विदमसिद्धं नमस्कारादीनामेव मङ्गलत्वात्तेषां च बहुशः फलान्तरश्रुतेरिति**

आलोककण्टकोद्धारः ।

नियमो न पक्षदृष्टान्तयोरपि प्रमत्तादिना अननुष्ठानात् आरम्भणीयायामपि तथात्वेन सत्यन्तवैयर्थ्याच्चेति मैवं नहि कर्ममात्रे, तस्याङ्गत्वमभिमतं किन्तु मङ्गलजन्यविघ्नध्वंसपूर्वकमात्रे, एवं प्रयाजारम्भणीययोरपि सफलदर्शत्वाद्यवच्छेदेन तदभिमतं तत्तज्जातीयपूर्वानुष्ठाननियमश्च तेषामावश्यक एव यदि तु दर्शत्वाद्यवच्छेदेनैव अङ्गता तदा कर्माङ्गमिति साध्ये कर्मपदं सफलकर्मपरं तथाच हेतावपि तादृशनियतपूर्वभावः पर्यवस्यतीति न दृष्टान्तासिद्धिरिति मम प्रतिभाति । कश्चित्तु—नियमपदस्य वेदबोधितत्वमर्थः तथा च फलवत्कर्मारिप्समानपदतत्पूर्वपदयोर्विकल्पेन हेतुद्वयं नचाद्यपदगर्भहेतौ प्रधाने व्यभिचारः तस्य तदारिप्समानेनाकरणात् किन्तु तत्कुर्वाणेनेत्याह । तदसत् वेदबोधितत्वं हि स्वरूपेणाङ्गत्वेन प्रारब्धकर्माङ्गत्वेन वाभिमतं तत्पूर्वकर्तव्यत्वेन तत्त्वविवक्षायां वैकल्पिकविशेषणयोर्द्वयोरपि वैयर्थ्यापत्तेः नाद्यौ अन्याङ्गे भ्रमादन्यत्र क्रियमाणे अफले व्यभिचारात । नचान्यानङ्गत्वमपि देयम् प्रथमे भ्रान्त्यान्याङ्गतया क्रियमाणाफलदर्शादौ व्यभिचारात् । नच तस्यापि स्वफलाङ्गत्वान्नान्यानङ्गत्वं पक्षे संदिग्धासिद्धिभियाऽन्यप्रारब्धकर्मानङ्गत्वस्य वाच्यत्वात् । द्वितीये अन्यानङ्गत्वे सत्यङ्गत्वेन वेदविहितत्वमेव सम्यगिति पदान्तरव्यर्थता प्रयाजादावसिद्धिश्च अन्त्ये तावन्मात्रस्यैव सामर्थ्यं पदान्तरस्यानर्थक्यादिति । आरब्धेति । प्रधानतावच्छेदकावच्छिन्नेत्यर्थः । तादृशं च दर्शादौ षट्कादिकमिति नाद्यकरणे व्य-

आलोकः ।

चेत् फलान्तराभाव इति फलान्तरप्रतिसंधानाभाव इत्यर्थः । तथा च नियमतस्तत्पूर्वकरणे फलान्तरप्रतिसंधानं यत्र न हेतुरिति हेत्वर्थः पर्यवस्यति अस्ति च तथा ग्रन्थादिपूर्वक्रियमाणप्रणामादौ आरम्भाणीयादौ च तत्कालकरणे फलान्तरप्रतिसन्धानं बीजं दर्शारम्भकालत्वेनैव फलान्तरश्रुतेः । अत एव शिखाबन्धनमङ्गं प्रधानं चेति सर्वसिद्धान्तः । फलान्तरप्रतिसंधानाप्रतिसन्धानाभ्यामुभयोपपत्तेः यथाश्रुते त्वेकस्य फलान्तरसत्त्वासत्त्वयोरसंभवेन कथमङ्गप्रधानभावो घटेतेति सर्वं सुस्थम् । वस्तुतो यथाश्रुत एव हेतुः मङ्गलीभूतनत्या-

आलोकदर्पणः

यावत् तेन क्रियमाणत्वादिति मूलार्थः । यथाश्रुतइति । ननु फलान्तरसत्त्वासत्त्ववत् प्रतिसंधानाप्रतिसंधाने अपि विरुद्धे व्यक्तिभेदमादाय चाविरोधे प्रधानीभूतशिखाबन्धनस्थले तेनैवाङ्गापवादनिरङ्कुतादोषोद्धारे च सत्त्वासत्त्वाभ्यां किमपराद्धमिति चेत् सत्यम् फलान्तरसत्त्वासत्त्वयोरपि प्रतिसंधानाप्रतिसंधाने एव प्रयोजके इत्युपजीव्यत्वादिदमेवादृतमिति । यद्वा फलान्तराप्रतिसंधानपदेन स्वसन्निहितकर्मफलवत्त्वं प्रतिसन्धानमुक्तं तथा च प्रधानफलवत्त्वप्रतिसंधानं स्वतन्त्रफलवत्त्वप्रतिसन्धानं वाङ्गप्रधानभावनियामकमेकव्यक्ता-

आलोककण्टकोद्धारः ।

भिचार इतिभावः। फलान्तरप्रतिसंधानाभाव इति । प्रकृतफलप्रतिसंधान इत्यर्थः । तस्यैव शिखादावङ्गत्वप्रयोजकत्वादिति भावः । अत एव अतएवेत्यादि न विरुद्धं प्रतिसंधानाप्रतिसंधानाभ्यामित्यस्य फलान्तरप्रतिसंधानप्रकृतफलाप्रतिसंधानाभ्यामित्यर्थः, यथाश्रुतस्य विरोधात् । इदमपि विशेषणं पक्षतावच्छेदकमतो न

आलोकः ।

दिव्पक्तीनां फलान्तराभावेनासिद्धत्वाभावादिति प्रागुक्तयुक्तेरनुमानमप्यविकलमिति श्रुत्यनुमानाभ्यामित्युक्तम्, अयं च प्रतिसंधानाकार इत्यवधेयम्। तेनायमर्थः यदीदं फलान्तराभावे सति फलवत्कर्मारिप्स-

आलोकदर्पणः

वपि अङ्गलक्षणं चात्र कल्पे प्रधानोपकारकत्वमात्रमिति। वस्तुत इति। यद्यपि हरिनमस्कारादावनुद्देश्यमपि फलं भवत्येव तथाप्यतादृशमेव मङ्गलं पक्षीकार्यमित्याशयः। ननु फलान्तराभावगर्भितेन हेतुनाङ्गत्वे सिद्धे हेतुनिष्ठा व्याप्तिः सिध्येत अन्यथाऽनुकूलतर्कविरहकालीनव्यभिचारसंशयप्रतिसंधानाद्व्याप्तिरशक्यैव स्यात् सिद्धायां च व्याप्तावनुमानादङ्गत्वनिश्चय इत्यन्योन्याश्रय इत्यत आह— अयं चेति प्रतिसंधीयते व्यभिचारसंशयनिरासद्वारा व्याप्तिरनेनेतितर्कस्तदाकारस्तत्स्वरूपं तदेत्यनन्तरमङ्गं स्याच्चतश्चेति पूरणीयम्। नान्योन्याश्रय इति। अङ्गत्वानुमानपरतयैव यैरिदं व्याख्यातं तेषामङ्गत्वे सिद्धे

आलोककण्टकोद्धारः।

भागासिद्धिरिति ध्येयम्। मङ्गलीभूतेति। योगसिद्ध्यधिकरणन्यायेन नानाफलककर्मणोऽपि समुच्चयबोधकं विना प्रयोगभेदापेक्षणादिति भावः। यदि त्वनिच्छयापीत्याद्यर्थवादबलाद्भगवन्नमस्कारादेरकामनाविषयपापनाशकत्वमपि मानसिद्धं यदि च क्रतुपुरुषोपकारकस्य खादिरताया इव न योगसिद्धिन्यायविषयता तदा पूर्वत्रैव तात्पर्यम्। सिद्धे फलान्तराभावे तेनाङ्गत्वं अङ्गत्वेन च पूर्वरीत्या फलान्तराभावः साध्य इत्यन्योन्याश्रयादाह- अयं चेति। इदं च संभवप्राचुर्यादुक्तम् वस्तुतो न तत्र सिद्धेनाङ्गत्वेन फलान्तराभावसाधनं किन्तु सामान्यतो दृष्टावतारे समाप्तिफलकत्वे अङ्गं स्यात्तथा च लाघवमन्यथा गौरवमिति प्रतिसंधाने गौरवलिङ्गेन फलान्तराभावसाधने परिशेषानुमानवद्धिकार्यैक्यसंभवज्ञानार्थमङ्गत्वसाधनसंभवादिति·

आलोकः ।

**मानेन नियमतस्तत्पूर्वं क्रियमाणं स्यात्तदा प्रधानसामानाधिकारिकं स्यात् एवं च लाघवमन्यथा गौरवमित्युक्तमेवानेन विव्रियते इति अतो नान्योन्याश्रयः। बोधनात्-प्रकृतलाघवसहकारेण बोधनसंभवात् ।**

आलोकदर्पणः ।

फलान्तराभावनिश्चयः तस्मिंश्च सत्यङ्गत्वानुमानमित्यन्योन्याश्रयः स चात्र व्याख्याने नास्तीत्यर्थः। फलान्तराभावे लाघवमेतावन्मात्रं यत्र प्रतिसंहितं तत्राङ्गत्वनिश्चयात्पूर्वं फलान्तराभावो निश्चेतुं शक्य एवेत्यन्योन्याश्रयश्चिन्त्यः किन्तु पूर्वोक्तानुगुणतयैव संगतौ प्रसङ्ग-संगतिर्नात्र पूरणीयेति प्रतिसंधानाकारतया व्याख्याने भावः । ननु-कर्मार्थितयेति विशेषणस्य फलान्तराभावविशेषणस्य च साधनाया-चारेति मूलं तच्च प्रतिसंधानाकारपक्षे न युक्तं असिद्धस्यैव प्रसञ्जक त्वादित्याशङ्क्य नेदं तत्साधनाय मूलमपि तु लाघवप्रतिसंधानस्य प्रमाणसहकारेण फलान्तराभावपर्यवसानपरमित्याह–बोधनादिति ।

आलोककण्टकोद्धारः ।

नान्योन्याश्रय इति मन्तव्यम् । यत्तु फलान्तराभावस्योक्तरीत्या सिद्धत्वेनानुमानत्वं त्यक्त्वा तर्करूपतोक्तेति तन्न फलान्तराभाव-संभवे प्रतिसंधानस्याप्याभासतापत्तेरिति । प्रधानायापीतिमूलम् । नन्वेदमसिद्धम् आरम्भद्वारकं चैतदङ्गमिति नवमे दर्शारम्भे उपदिष्टा सौर्याद्यारम्भे उपदेशप्राप्ता पुनरनुष्ठेयेति द्वादशे चाभिधानात् नहि प्रधानस्यातिदेशोऽस्तीतिवाच्यम् प्राभाकरणां तथैव सिद्धान्तात् । अत एवानङ्गत्वेऽप्यारम्भणीयावन्नियतमनुष्ठानं मङ्गलस्य स्यादित्या-शङ्क्याङ्गत्वासंभवादारम्भणीयादौ तथा कल्पनमिह तु न तदसम्भव इति वर्द्धमानेश्वरेण कण्ठेनैवोक्तम्। उद्योते च न च यत्पूर्वं नियमेन यदनुष्ठीयते तत्तस्याङ्गमारम्भणीयादौ व्यभिचारादित्युक्तम् अग्रिमग्रन्थमपि प्रतिसन्धाने निःक्षिपति बोधनसम्भवादिति ।

**ननु मङ्गलमलौकिकं लौकिके नाङ्गं भवति लोकावगतकारणत एव तदुपपत्तेः अत एव गृहस्था-**

"अशास्त्रा तूपसम्प्राप्तिः शास्त्रं न स्यात् प्रकल्पकं तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत्" इत्यधिकरणे पूर्वमीमांसायां ६।२।१८। गृहस्थादिकर्मबोधिकाः 'एवमिदं गृहकर्म रमणीयं भवति' इत्यादिस्मृतयो न श्रुतिमूलाः शास्त्रमन्तरेणापि लोकादेव रमणीयताया ज्ञातुं शक्यत्वादिति वेदबोधितेष्टसाधनताककर्मत्वरूपमलौकिकत्वं न गृहस्थादिकर्मणामिति उपक्रान्तमपि गृहस्थादिकर्म वीतायां फलेच्छायां मध्ये फलप्राप्तौ वा त्याज्यमिति सिद्धान्तिते आरे भग्ने सति 'आरे भग्ने इन्द्रबाहुर्बद्धव्यः' 'पायसं च ब्राह्मणो भोजयितव्य' इति प्रायश्चित्तं श्रुतं तच्च इन्द्रबाहुबन्धनादिकं लौकिकरथादिकर्मणामङ्गमिति मध्ये तेषां त्याग इव एषामपि त्याग एवाङ्गिनोऽननुष्ठाने अङ्गानुष्ठानस्य निष्प्रयोजनत्वादिति शङ्किते इन्द्रबाहु-बन्धनादि–प्रायश्चित्तोपदेशिस्मृतीनां शास्त्रमेव मूलं न लोकः प्रायश्चित्त-निष्ठादृष्टसाधनत्वस्य ततोऽवगन्तुमशक्यत्वात् इति तानि अलौकिककर्माणि अलौकिकं च लौकिके नाङ्गमिति तेषां पुरुषार्थत्वमिति न त्याग इति सिद्धान्तितम् । एवं च अलौकिकं मङ्गलं लौकिकसमाप्तिरूपफलजनकं न भवितुमर्हति लौकिकात् बुद्धिप्रतिभादिकारणकलापादेव समाप्तिसिद्धेरित्याशयेन शङ्कते **नन्विति । अलौकिकम्**–वेदबोधितेष्टसाधनताकम्, **लौकिके**-मानसेतर-लौकिकसाक्षात्कारविषये समाप्त्यादिरूपे फले **नाङ्गम्**––न जनकम् । ननु अलौकिकं लौकिके नाङ्गमिति नियमो न संभवति पुत्रवृष्ट्यादिलौकिकफलजनके अलौकिकपुत्रेष्टिकारीर्यादौ व्यभिचारादिति चेन्न व्यापारीभूतयोः पुत्रोत्पत्ति-

**दावारे भग्ने इन्द्रबाहुर्बद्धव्यः पायसं ब्राह्मणो भोजयितव्य इत्यत्र तदुभयं नाङ्गं किन्तु नैमित्तिकं तद्वदिदमप्यारम्भसमयनिमित्तकमस्तु, विश्वजिन्न्यायात् स्वर्गः फलमिति चेन्न-तस्यापूर्व्वरूपोपकारजनकाङ्गविषयत्वात्।**

---

प्रतिबन्धकदुरितानिवृत्त्यवग्रहानिवृत्त्योरेव तत्र फलत्वोपगमेनाव्यभिचारात् । नचैवं यागे पुत्रवृष्ट्यादिसाधनत्वस्य श्रुतिबोधितस्य अनुपपत्तिरिति वाच्यम् यत्र लौकिकं फलं श्रूयते तत्र प्रयोजकत्वस्यैव विध्यर्थत्वाङ्गीकारेणादोषात् । **आरः**—लोहकीलः रथचक्रं वा, **इन्द्रबाहुः**—लौहकाकः, **तदुभयं**—लौहकाकबन्धनं ब्राह्मणभोजनं च, **नाङ्गं**—न लौकिकरथादिकर्मणोऽङ्गम्, **नैमित्तिकम्**—अपूर्वद्वारा आरभङ्गनिमित्तकपापनाशजनकम् । नन्वेवं मङ्गलस्य समाप्त्यजनकत्वे आरम्भसमये शिष्टैर्नियमेन तन्नानुष्ठीयेतेत्यत आह—**तद्वदिति** । इन्द्रबाहुबन्धनादिकं यथा आरभङ्गोत्तरकालसहकारेणैव स्वर्गफलजनकव्यापारजनकमेवं मङ्गलमपि आरम्भसमयसहकारेणैव स्वर्गफलजनकव्यापारजनकमित्यर्थः । **आरम्भः**—आद्यकृतिः । ननु मङ्गलं यदि न समाप्तिजनकं तर्हि तस्य किं फलमत आह—**विश्वजिदिति** । यथा विश्वजिता यजेतेत्यत्र अश्रुतोऽपि स्वर्गः सर्वाभिलाषविषयत्वेन फलमिति 'स स्वर्गः स्यात् सर्वान्प्रत्याविशिष्टत्वात्' इति सूत्रेण सिद्धान्तितं मीमांसायां तथा मङ्गलस्यापि स्वर्ग एव फलमिति भावः । परिहरति **तस्येति** । अलौकिकं लौकिके नाङ्गमिति न्यायस्येत्यर्थः । एवं च वृष्टिकामो यजेतेत्यादौ समभिव्याहृतफलजनकत्वस्यैव विध्यर्थत्वस्य सकलमीमांसकसिद्धस्य न त्याग इति भावः । **उपकारो**—व्यापारः । अयं न्यायः यदङ्गमपूर्वरूपोपकार-

अयन्तु प्रतिबन्धकाभावरूप उपकारः तस्य च लोकावगतकारणसहकारितैव, प्रतिबन्धके सति तस्मात्तदनुत्पत्तेः । अपूर्वन्तु न तथा । विघ्नध्वंसद्वारा चेदमङ्गं न त्विडो यजतीत्यादिविधिबोधितप्रयाजाद्यङ्गयागवददृष्टद्वारा मङ्गलजन्यादृष्टं विनापि स्वतः सिद्धविघ्नविरहवत आरब्धनिर्व्वाहात् । न चैवं विघ्नध्वंसद्वारापि नेदमङ्गं तत्रैव व्यभिचारादिति वाच्यं । सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वात् । नचैवं प्रयाजादेरपि दुरितध्वंस एव द्वारं, कल्प्यदुरितध्वंसतः अपूर्व्वस्य लघुत्वात् । वस्तुतस्तु प्रायशो विघ्नसंशये तन्निश्चये वा

---

जनकं तद्विषयः कारीरीयागश्च नापूर्वरूपोपकारजनकः किन्तु प्रतिबन्धकाभावरूपोपकारजनकः एवं मङ्गलमपीति नोक्तन्यायविषयः । ननु मङ्गलस्याशुविनाशितया चिरकालानन्तरभाविसमाप्तिं प्रति जनकता न स्वरूपेण किन्तु अपूर्वद्वारैवेति तथा चोक्तनियमस्य विषय एवायमित्यत आह—**अयन्त्विति** । मङ्गलजन्यस्त्वित्यर्थः मङ्गलस्याशुविनाशित्वेऽपि स्वजन्यविघ्नध्वंसद्वारा समाप्तिजनकत्वसम्भवान्नापूर्वस्य द्वारत्वकल्पनेति भावः । ननु तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वाद्विघ्नध्वंसस्य कथं समाप्तिजनकत्वमत आह—**तस्य चेति** । विघ्नाभावस्येत्यर्थः । **सहकारितैवेति** । क्लृप्तेतिशेषः तथा च सहकारिता क्लृप्तैवेत्यर्थः । क्लृप्तिमेव दर्शयति **प्रतिबन्धके इति** । प्रतिबन्धकाभावस्य कार्यसामान्ये हेतुतावश्यिकेति भावः । ननु यत्र लौकिकं फलं श्रूयते तत्रापि तज्जनकत्वमेव विध्यर्थः तस्य च

**नियमेन शिष्टानां मङ्गलाचरणे विघ्नाभाव एव द्वारत्वेनाभिमतः । निर्विघ्नं समाप्यतामिति कामनया तत्करणपक्षे श्रुतित एव द्वारत्वनिर्णयः । किञ्चापूर्वे द्वारत्वे लौकिकाङ्गत्वविरोधः क्लृप्तकारणादेव तदुत्पत्तेरिन्द्रबाहुबन्धनवत् ।**

प्रगल्भी ।

तक्षसूत्राधिकरणविरोधं शङ्कते नन्विति। आरम्-लोहकीलकम्। गृहरथादि चक्राङ्गम् । इन्द्रबाहुः-लोहकाकः । आरम्भसमयेति । नन्वकरणे प्रत्यवायाश्रवणात्कथं नैमित्तिकत्वम् । नच 'मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां

जनकता अपूर्वद्वारैवेति वृष्टिकामो यजेतेत्यादिविधीनामप्रामाण्यापत्तिरत आह—**अपूर्वं तु नेति** । लौकिकफलजनकयागादेर्न व्यापारोऽपूर्वं किन्तु प्रतिबन्धकपापनाश एव तत्र व्यापार इति भावः । एवं च यत्र लौकिकं फलं श्रूयते तत्र प्रतिबन्धकपापनाश एव व्यापार इति बोध्यम् । ननु विघ्नात्यन्ताभावस्य कुतो मङ्गलद्वारत्वसंभवस्तस्य नित्यत्वात् अत आह—**विघ्नध्वंसेति** । **तत्रैव**—विघ्नात्यन्ताभावस्थल एव । **लघुत्वात्**—लघुशरीरत्वात् । प्रकृते चापूर्वस्य द्वारत्वासम्भवादगत्या गुरुरपि व्यापारः स्वीक्रियत इति भावः । ननु नियमतो विघ्नज्ञानसत्त्वे एव शिष्टैस्तत्करणं निर्विघ्नं समाप्यतामिति कामनया शिष्टैस्तत्करणं चासिद्धमित्यरुचेराह **किञ्चेति** । **तदुत्पत्तेः**—तदुत्पत्तिनियमात् । लौकिकफलोत्पत्तिनियमादिति यावत् ।

चैव विनिपातो न विद्यते ॥' इत्यनेन विनिपाताभावबोधनात् अकरणे तत्सम्भव इति वाच्यम् । तत्र मङ्गलपदस्यान्यादृशदर्शनादिपरत्वादिति चेन्न । आरम्भसमयं निमित्तं प्राप्य क्रियमाणतया पारिभाषिकनैमित्तिकत्वाभिधानात् । स्वर्गफलमिति । नन्वेतदसम्भवदुक्तिकम् । यावता वैदिकत्वाङ्गीकारे शिष्टाचारविशेषानुमिता श्रुतिरेव मूलभूतप्रमाणम् तत्र वक्तव्यम् । तथा च प्रारिप्सितसमाप्तेरेव फलत्वबोधनात् क्व विश्वजिन्न्यायावतारः क्व वा स्वर्गफलकत्वमिति चेद् न । तक्षसूत्राधिकरणविरोधेन लौकिकाङ्गत्वे निरस्ते काम्यमानमपि फलमफलमेव । तथा चारम्भसमयनमस्कारादिकर्त्तव्यताबोधकाचाराद्यनुमितश्रुतेः प्रामाण्यनिर्वाहाय विश्वजिन्न्यायात्स्वर्गफलकत्वकल्पनं न विरुद्ध्यत इति भावः । अङ्गत्वे ह्युपकारकत्वं तन्त्रम् तदिन्द्रबाहुबन्धनादौ नास्ति तज्जन्यातिशयं विना लौकिकगृहरथादिव्यापारादेव फलसिद्धेः । मङ्गलजन्यप्रतिबन्धकाभावरूपमुपकारं विना समीहितासिद्धेः । तदुपकारद्वारा मङ्गलस्य लौकिकाङ्गत्वं स्यादित्याशयवानाह–तस्येति । तस्यालौकिकं न लौकिकाङ्गमिति रूपस्य न्यायस्यापूर्वद्वारा उक्ताङ्गत्ववादिनं प्रत्याह–विघ्नध्वंसेति । कल्प्येति । मङ्गले तज्जनितापूर्वं विनाप्यारब्धनिर्वाहात् । गुरोरपि दुरितध्वंसस्य द्वारत्वं कल्प्यते । प्रयाजादौ तज्जन्यापूर्वं विना न दर्शादेः कार्यनिर्वाहकत्वमिति न तथेति भावः । ननु जन्मान्तरीयसाधारणमङ्गलस्य समाप्तिहेतुतापक्षे मङ्गलजन्यापूर्वव्यतिरेकग्रहस्या-

प्रगल्भी ।

शक्यत्वम् । तथा च तत्पक्षे मङ्गलेऽपि लघुत्वादपूर्वस्यैव द्वारत्वकल्पनमुचितमिति चेव एतदस्वरसादाह—वस्तुतस्त्विति वदन्ति । तच्चिन्त्यम् । वस्तुतस्तु येनाप्यपूर्वद्वारता वाच्या तेनापि विघ्नाभावस्य द्वारताऽवश्यं वाच्या । सति विघ्नेऽभिमतासिद्धेः । तथा चावश्यकत्वात् विघ्नाभावद्वारतैव युक्ता न त्वपूर्वस्यापि गौरवादित्यर्थात् । तथाच दूषणान्तरमाह—वस्तुतस्त्विति । तथा च विघ्नज्ञानवान् प्रारिप्सितसमाप्तिकामो मङ्गलमाचरेदिति श्रुत्युन्नयनात् । तत्र च विघ्नरूपानिष्टकर्तृविशेषणोपादानमहिम्ना विघ्नाभावद्वारत्वे तात्पर्यलाभात् तन्निश्चयो न तु साक्षादिति भावः । श्रुतित एवेति । निर्विघ्नपरिसमाप्तिकामो मङ्गलमाचरेदिति कल्पनीयवेदादेव साक्षाद्द्वारत्व निश्चय इति भावः । ननु द्वारत्वस्य तज्जन्यत्वे सति तज्जन्यजनकत्वरूपस्य पदादनुपस्थितस्य कथमुक्तश्रुतिवाक्याद्बोधनमिति चेत् न-मङ्गलस्य विघ्नाभावविशेषणकसमाप्तिं प्रति कारणत्वबोधने विघ्नाभावं प्रत्यपि कारणत्वबोधनात् । तस्य विशेषणत्वान्मङ्गलजन्यधीविषयीभूतसमाप्तिविघ्नाभावयोश्च जन्यजनकभावसम्बन्धस्य वाक्यार्थबललभ्यत्वात् द्वारत्वस्य श्रौतज्ञानविषयत्वादिति भावः । किञ्चेति । लौकिकाङ्गत्वे हि उपकारकत्वं तन्त्रं वाच्यम् । अदृष्टद्वारत्वे तदेव न स्यात् । नचादृष्टमुत्पाद्य विघ्नध्वंसस्तेन जननीय इति वाच्यम् । तदावश्यकत्वात्तदेवास्तु किमन्तर्गडुनाऽपूर्वेणेति भावः ।

आलोकः ।

अत्र स्वरूपासिद्धिं शङ्कते-ननु मङ्गलमिति । यत्तु मङ्गलं नाङ्गमलौकिकत्वादिति प्रतिरोधं पक्षधर्मावच्छिन्नसाध्यव्यापकं लौकिकानङ्गत्वमुपाधिं वा शङ्कते इति तन्न 'विश्वजिन्न्यायात् स्वर्गः फलमि'त्युत्तरग्रन्थविरोधात् न ह्यसिद्धेन प्रतिरोधस्तुल्यबलत्वाभावात् न वा साधनव्यापक उपाधिः साधनव्यापकता कथमुपाधेः साधनस्य लौकिकाङ्गभूतलौकिककर्मण्यपि सत्त्वादिति चेन्न अलौकिकत्वपक्षधर्मावच्छिन्नसाध्यव्यापकस्य तदवच्छिन्न साधनव्यापकत्वात् यदवच्छिन्नसाध्यव्यापकस्तदवच्छिन्नसाध-

आलोकदर्पणः ।

अत्र स्वरूपासिद्धमिति । लाघवगम्यस्य फलान्तराभावस्वरूपस्य बाधितत्वादसिद्धिरित्यर्थः । प्रसञ्जनपक्षे यथाश्रुतस्वरूपासिद्धेरसङ्गतेरित्यवधेयम् । नाङ्गमिति । न लौकिकमङ्गमित्यर्थः । लौकिककर्माङ्गे साध्याव्यापकत्वादाह–पक्षधर्मेति । अलौकिकत्वरूपेत्यर्थः । नह्यसिद्धेनेति । अत्र केचित् अङ्गत्वसाधकहेतोरुभयसिद्धतया बलवत्त्वशङ्कायां स्वमते तदसिद्धिप्रदर्शनाय विश्वजिदिति ततश्चसत्प्रतिपक्षत्वमप्यदुष्टमिति तन्न । अलौकिकत्वस्याप्युभयसिद्धतया पूर्वहेतोरुभयसिद्धत्वमादाय अधिकबलवत्त्वशङ्काया अनु-

आलोककण्टकोद्धारः ।

स्वरूपासिद्धिमसंभवम् । नाङ्गं न लौकिकाङ्गम् । लौकिकाङ्गे साध्याव्याप्तेराह, अलौकिकत्वेति । न चासिद्धेनेति । नहीत्यर्थः । नन्वसिद्धिर्विश्वजिन्न्यायादित्येतावन्मात्रलभ्येति पूर्वप्रतीकवैयर्थ्यमित्याशङ्क्य तदुपयोगमाह–साध्यव्यापकेति । अत्र साध्यस्य लौकिकत्वावच्छिन्नाङ्गत्वस्य

आलोकः।

नाव्यापकस्योपाधित्वात् अन्यथा महानसत्वावच्छिन्नवह्निव्यापकस्य व्यञ्जनवत्वादेरप्युपाधित्वापत्तेः। साध्यव्यापकनिवृत्त्या साध्यनिवृत्तिस्तया च तद्व्याप्यसाधननिवृत्तिरित्येवं न किञ्चिदनुपपन्नम्। नचैवं साध्याभावस्यैव दोषत्वे अग्रे हेत्वभावसाधनमनुचितं दत्तोत्तरकल्पत्वात्। समाप्तिफलकताव्यवस्थापनस्यात्र प्रकृतत्वेन

आलोकदर्पणः।

त्थानात् प्रतिसन्धानाकारपत्ते सत्प्रतिपक्षत्वायोगाच्च शङ्कते—साधनव्यापकतेति। स्वोक्तां स्वरूपासिद्धिं व्युत्पादयति—साध्यव्यापकेति। लौकिककर्माङ्गत्वव्यापकं लौकिकत्वं तन्निवृत्त्या लौकिककर्माङ्गत्वनिवृत्तिः वैदिककर्माङ्गत्वव्यतिरेकश्च ग्रन्थादिप्राक्कालक्रियमाणमङ्गले सिद्ध एवेत्यङ्गत्वसामान्याभावेन फलान्तराभावे सतीत्यादेर्व्याप्यस्य व्यतिरेकः सिद्ध्यन् विशेष्यभागसत्त्वात्फलान्तराभावरूप विशेषणाभावे पर्यवस्यतीत्यर्थः। अत्र साध्यसाधनपदे आपादकपरे, अग्रे हेतुपदमप्यापादकपरम्। केचित्त्वलौकिकत्वावच्छिन्नसाध्यव्यापकलौकिकानङ्गत्वनिवृत्त्येत्यर्थमाहुः। तन्न लौकिकानङ्गत्ववादिनो मङ्गले तन्निवृत्तेरसिद्धेः। नचेति। फलान्तराभावाङ्गत्वसमानाधि-

आलोककण्टकोद्धारः।

व्यापकं लौकिकानङ्गत्वं तन्निवृत्त्या विशेषणवति विशिष्टनिवृत्तिरङ्गत्वरूपविशेष्यनिवृत्तौ पर्यवस्यति इति न व्याख्यानं लौकिकानङ्गत्वव्यावृत्त्या लौकिकाङ्गत्वेनाङ्गत्वस्य विशिष्टस्य वा निषेद्धुमशक्यत्वाद्बाधात् तस्मात्साध्यस्य लौकिकाङ्गत्वस्य व्यापकं लौकिकत्वं तन्निवृत्त्या पक्षधर्मतावललभ्यलौकिकाङ्गत्वनिवृत्तिरित्यर्थः यथाश्रुतमूलानुरोधात्। उत्तरमाह समाप्तीति। हेत्वभावं विनेति। यद्यप्येवं साध्या-

आलोकः ।

फलान्तरविरहस्यैव मुख्यतः प्रतिपाद्यत्वात् । हेत्वभावं विना बाधा-संभवाच्च बाधप्रयोजकव्यापकाभाववत्साध्यसाधकहेतोरपि सत्वात् । नन्वङ्गं सहकारिभेदः मङ्गळं च तथा तद्विना फलासिद्धेरित्यत आह

आलोकदर्पणः ।

कारिकत्वक्रमेण लाघवावतारे सन्निहितलाघवोपपादकस्याङ्गत्वस्यैव खण्डनं दूषणमुच्यतामिति नन्वेत्यर्थः । मुख्यत इति । तथा च नन्वित्यादिपूर्वपक्षवादिनोऽपि मुख्यतः फलान्तरविरह एव बाध्य इति भावः । बाधेति । यद्यपि बाधासिद्धौ तद्द्वारा कथमापादकाभावनिर्णयः, अधिकबलवत्त्वेन तत्सिद्धौ तु साध्यसा-धकेत्यादिकमलग्नकं तथा च यथाश्रुतमिदमनुपपन्नं तथाप्येवं व्याख्येयं हेत्वभावं फलान्तराभावरूपापादकाभावनिश्चयं विना बाधासम्भवात्–लाघवज्ञाने बाधासम्भवात् । अङ्गत्वनिराकरणमुखेन लाघवज्ञानबाधनप्रयोजनको व्यापकस्य लौकिकत्वस्याभावो यथास्ति

आलोककण्टकोद्धारः ।

भावेन हेत्वभावो हेत्वभावेन च साध्याभावः साध्य इत्यन्योन्याश्रयः तथापि पूर्वत्रैव निर्भरः वस्तुतो बाधेपि तात्पर्यम् । यत्तूपाध्यायैः कारीर्यादिवदारब्धं गृहरथाद्यप्यन्तरा फलेच्छाविच्छेदेऽप्यवश्यं समा-प्यमिति प्राप्ते तत्र यो यदय इत्युक्त्वा न यजत इत्यादिनिन्दया अलौकि-कत्वात्तथात्वेपि न गृहादौ तथा लौकिकत्वादित्यभिहिते गृहादीनां लौकिकत्वे अलौकिकाङ्गान्वयो न स्यादित्याशयेन तथाच तक्ष्णां शास्त्रमि-तिसूत्रेण अलौकिकाङ्गे इन्द्रबाहुबन्धनादिसंबन्धे दर्शिते तयोर्नैमित्ति-कत्वं नाङ्गत्वमिति तक्षसूत्राधिकरणे सिद्धान्तितं तद्विरोधशङ्क्येयमिति व्याख्यातं तस्यापि अयमेवार्थो अधिकरणविरोधेन बाधासिद्ध्यादि-हेत्वाभास एव पर्यवसानादित्यवधेयम् । पितृचरणास्तु उपाधिपर

आलोकः ।

**लोकेति । तथा च तद्विना फलासिद्धेरसिद्धेरित्यर्थः । इन्द्रबाहुः— आयसवायसः । आरम्भसमयनिमित्तकं**—तत्समयनियतकर्तव्यताकं न तु नैमित्तिकमेव । आरे भग्न इति वन्निमित्तसप्तम्यश्रुतेरकरणे प्रत्यवायाश्रवणाच्च । **तस्येति** । अङ्गत्वावच्छिन्नलौकिकानङ्गत्वव्यापकमपूर्वरूपोपकारजनकत्वरूप उपाधिरित्यर्थः । तथा च

आलोकदर्पणः ।

तथा साध्यस्य प्रतिसन्धीयमानस्य साधकोऽनुगुणो यो हेतुः फलान्तराभावस्तस्य सत्त्वात् । अयं भावः अङ्गत्वे बाधिते तत्प्रणाल्या लाघवप्रतिसन्धानं माऽस्तु फलान्तराभावस्याबाधे तन्मूलकफलैक्यलाघवप्रतिसन्धानं स्यादेवेति । ननु मङ्गलमित्यादिना तक्षसूत्राधिकरणनिषेधं शङ्कते इति केचित् । वस्तुतो लौकिककर्मप्राक्क्रियमाणत्वावच्छिन्नाङ्गत्वव्यापकं लौकिकत्वनुपाधिं शङ्कते मूले-नान्विति । अङ्गत्वावच्छिन्नेति । लौकिकत्वनिवृत्या लौकिककर्माङ्गत्वाभावे साध्ये ऽपूर्वरूपोपकारजनकत्वमित्यर्थः । प्रधानीभूते लौकिके कर्मणि

आलोककण्टकोद्धारः ।

एव ग्रन्थः परं तु लौकिकत्वमुपाधिः अलौकिकमात्रानङ्गत्वं च पक्षधर्म्मः साध्ये व्याप्यतावच्छेदक इत्युपाध्यभावात् पक्षधर्मताबलादङ्गत्वाभावसिद्धिरित्याहुः । आयसवायस इति । कपाटे तिर्य्यङ्न्यस्तः काकाकारो लोहदण्डः कीलकारोपणस्थानं लोहकाक इत्येव शिल्पशास्त्रे प्रसिद्ध इत्यर्थः । इन्द्र आराधयितव्य इत्येवं तुभाष्ये तक्षशास्त्रं पठितम् । प्रत्यवायेति । मङ्गलाचारयुक्तानामित्यत्र मङ्गलपदस्यान्यार्थत्वादिति भावः । भोजनादौ व्यभिचारादाह अङ्गत्वावच्छिन्नेति ।

आलोकः ।

व्यापकाभावे तदभावान्न साध्यभाव इति भावः । अयं—मङ्गलजन्य इत्यर्थः । उपाधेः साध्यव्यापकताग्राहकमनुकूलं तर्कमाह—तस्य- चेति । यद्यप्यदृष्टस्य साक्षाज्जनकत्ववत्साक्षात्प्रतिबन्धकत्वमप्य- संभवि न हि दृष्टसंपत्तावदृष्टं प्रतिबन्धकं पश्यामस्तथापि नापूर्वजनकत्वं यथाश्रुतमेव किंत्वनपेक्षणीयजनकत्वम् । अपेक्षा च

आलोकदर्पणः ।

शुद्धसाध्याव्यापकत्वादाह—अङ्गत्वेति । तथा च व्यापकत्वाभाव इति लौकिकत्वनिवृत्तिं प्रति लौकिककर्माङ्गत्वाभावस्य व्यापकत्वाभावे तदभावात्—लौकिकत्वाभावात् अङ्गत्ववादिनां यत्साध्यं लौकिककर्माङ्गत्वं तदभावो नेत्यर्थः । यद्वा व्यतिरेके उपाधिमत्तया लौकिकत्वस्य लौकिककर्माङ्गत्वं प्रति व्यापकत्वाभावे तदभावात् लौकिकत्वाभावान्न लौकिककर्माङ्गत्वरूपसाध्याभाव इत्यर्थः । उपाधेः साधनाव्यापकत्वप्रदर्शनाय अयं त्विति मूलं तद्व्याचष्टे—अयमिति । उपाधेरिति । अपूर्वरूपोपकारजनकत्वरूपस्योपाधेरङ्गत्वावच्छिन्न- लौकिककर्माङ्गत्वाभावं प्रति व्यापकताग्राहकमाहेत्यर्थः । अयमाशयः

आलोककण्टकोद्धारः ।

उपाधिर्व्यापकाभावेन साध्याभावसाधन इति शेषः । तथा चेति । व्यतिरेकयोर्व्याप्यभावेऽन्वययोरपि न व्याप्तिः व्याप्यव्यापकभाव- श्चेति न्यायादित्यर्थः । उपाधेरिति । तस्य चेति मूलस्यापूर्वं तु न तथेत्येकवाक्यतया साध्यव्यापकताग्राहकत्वं द्रष्टव्यम् । केवलस्य तु साधनाव्यापकताग्राहकत्वमिति ध्येयम् । अत एव कथन्न तज्जनक- मङ्गले उपाध्यभाव इत्युपसंहरिष्यति । यद्यपीति । तथा च न मङ्ग- लजन्यविघ्नध्वंसस्य लोकावगतकारणसहकारित्वमिति भावः ।

आलोकः।

साक्षात्परंपरया वेति न कश्चिद्विशेषः। तथा च परंपराप्रतिबंधकस्याप्यदृष्टस्याभावोऽपेक्षणीयो भवत्येवेति कथं तज्जनकमङ्गले नोपाध्यभाव इति भावः। अपूर्वम्—इष्टबाहुबन्धनादिजन्यम्। न तथा—लोकावगतकारणसहकारि। साक्षात्परंपरया वाऽनपेक्षणीयत्वादित्यर्थः। अनङ्गत्वमसहकारित्वं तद्विलम्बेन फलाविलम्बादवसेयम्। न

आलोकदर्पणः।

अङ्गस्य लौकिककर्माङ्गत्वाभावः स्यादपूर्वरूपोपकारजनकत्वाभावश्च स्यादित्यप्रयोजकत्वशङ्का न सङ्गच्छते अपूर्वरूपोपकारजनकत्वाभावे हि प्रतिबन्धकाभावरूपोपकारजनकत्वमेवं वाच्यम् प्रतिबन्धकाभावस्य च लौकिककर्मसहकारितया तज्जनकस्य लौकिककर्माङ्गत्वावश्यम्भावापत्तेरिति। ननु वैदिकाङ्गमङ्गलव्यक्तौ यथाश्रुतोपाधेः साध्याव्यापकतया लौकिककर्मासहकार्युपकारजनकत्वमुपाधिर्वाच्यः तथा च पक्षेऽप्युपाधिसत्त्वेन साधनव्यापकत्वमिति शङ्कते—यद्यपीति। लौकिककर्मानपेक्षणीयोपकारजनकत्वमुपादाय समाधत्ते-तथापीति। नापूर्वजनकत्वं यथाश्रुतमेवेत्यनन्तरं न लौकिककर्मासहकार्युपकारजनकत्वमिति शेषः। अनपेक्षणीयेति। लौकिककर्मानपेक्षणीयेत्यर्थः। एवञ्चोपाधिनिर्वचने अयन्त्वति तस्येति च मूलफक्किके साधनाव्यापकत्वपरे एव।

आलोककण्टकोद्धारः।

यथाश्रुतमिति। यागाद्यङ्गीभूतमङ्गलादिव्यक्तौ साध्याव्याप्तेरप्रयोजकत्वाच्चेति भावः। ननु दुष्कृतध्वंसवत् स्वकृतमपि परम्परयाऽपेक्षणीयं भवत्येव पुत्रेष्ट्यादिजन्यं तु साक्षादपीत्यत आह—अपूर्वमिति। न च मङ्गले तदिति। यत्र तस्याङ्गत्वं सविघ्नकर्मणि तत्र तद्विलम्बे-

आलोकः ।

च मङ्गले तदिति परमार्थः । नन्वपूर्वाजनकत्वे मङ्गलस्यापेक्षणीया-जनकत्वमुपाधिरपक्षव्याप्तिः स्यात्तदेव तु कुत इत्यत आह । विघ्नेति । यद्वा प्रसङ्गादाह-विघ्नेति । सतीति । यद्यपि सति विघ्नेऽपूर्वाद्वारेदमङ्गमित्यपि न सुवचं तथापि तदपूर्वं विघ्नं निवर्त्यारब्धनिर्वाहकमनिवर्त्य वा । नान्त्योऽसंभवात् । न हि सति प्रतिबन्धके हेतुसहस्रमप्यलम् । उत्तेजकत्वेऽप्यदृष्टस्य विशिष्टाभावो

आलोकदर्पणः ।

तत्र च सहकारितैवेति—अपेक्षणीयतैवेत्यर्थ इति ध्येयम् । ननु यथा अपेक्षणीयजनकत्वादलौकिकमपि मङ्गलं लौकिककर्माङ्गं तथा इन्द्रबाहुबन्धनादिकमपि लौकिककर्माङ्गमस्त्विति शङ्कायाम् अपूर्वान्त्विति मूलम् तद्व्याचष्टे—अपूर्वमिति । यद्वा साध्याधिकरणीभूते प्रयाजादावुपाधेः सत्त्वप्रदर्शनार्थमपूर्वन्त्विति मूलम् तद्व्याचष्टे—अपूर्वमिति । अत्र च पक्षे इन्द्रबाहुबन्धनादीत्यतद्गुणसंविज्ञानबहुव्रीहिणा प्रयाजाद्युक्तम् । इन्द्रबाहुबन्धनस्यानङ्गतया अङ्गत्वावच्छिन्न-लौकिकानङ्गत्वरूपसाध्याधिकरणत्वाभावात् । केचित्तु तस्यापूर्वरूपोपकारजनकत्वेत्यादिमूलं लौकिकानङ्गत्वे अपूर्वरूपोपकारजनकत्वलक्षणप्रयोजनकोपदर्शनमुखेनालौकिकत्वहेतोरप्रयोजकत्वप-

आलोककण्टकोद्धारः ।

नावश्यं विलम्ब इति भावः । उत्तेजकत्वेपीति । यद्यपि प्रहरं मा समाप्यतामित्याशया मन्त्रप्रयोगे कालभेद एव प्रतिबन्धको वाच्यः स च न मङ्गलनाश्य इत्युत्तेजकता तत्रावश्यकी । तथापि तत्र मङ्गलस्य जनकत्वे मानाभाव इति भावः । कल्प्येति मूलम् । मङ्गले तु तज्ज्ञानं विना अप्रवृत्तेः फलमेव दुरितमिति तात्पर्यम् । ननु तज्जन्यत्वे

आलोकः।

हेतुर्वक्तव्यः। तदपेक्षया विशेष्यविरह एव लघीयान्। आद्ये तन्निवर्तनस्यावश्यकत्वे तदेव द्वारमावश्यकत्वात् न त्वन्तराऽपूर्वं जनय-

आलोकदर्पणः।

रमित्याहुः। अपेक्षणीयाजनकत्वमिति। पूर्वोक्तमप्यनपेक्षणीयजनकत्वं नञ्ञ्यत्यासादेतत्परमेव। अत एव ध्वंसाद्यनपेक्षितजनकत्वेन मङ्गलेऽप्युपाधिसत्त्वात्साधनव्यापकत्वमिति नाशङ्कितव्यमिति भावः। सतीति। गौरवादित्यन्तमेतद्व्याख्या। मङ्गलजन्यादृष्टस्योत्तेजकत्वपक्षे विघ्ननिवृत्तिं विनापि कार्यं सम्भवति यद्यपि तथापि विघ्नाभावापेक्षया मङ्गलजन्यादृष्टाभावविशिष्टस्य विघ्नस्याभावो गुरुरिति न स हेतुरित्याह—उत्तेजकत्वेऽपीति। यद्यपि वर्षं देवदत्तग्रन्थो मा समाप्यतामिति कृत्यायामुद्देश्यत्वज्ञानाहितसंस्कारकालोपाध्योर्मङ्गलादनाशे समाप्त्यभावप्रसङ्गेन तत्रोत्तेजकत्वमवश्यं वाच्यं तथापि विघ्नपूर्वकसमाप्तौ न तथात्वमिति भावः। यद्वा कृत्यया तत्रादृष्टं विघ्नरूपं जन्यते तदेव मङ्गलेन नाश्यते न तु संस्कारकालोपाधी प्रति मङ्गलस्योत्तेजकतेति भावः। कल्प्येति मूलम्। प्रयाजादिजन्यापूर्वं विना दर्शाद्यदर्शनात् प्रयाजादेः सामान्यत एव हेतुत्वम् मङ्गलस्य तु तन्नियतापूर्वं विनापि प्रमत्तादि-

आलोककण्टकोद्धारः।

सतीत्यादिद्वारत्वं न श्रुतिगम्यमत आह—पूर्वत्रेति ननु द्वारत्वमपि श्रुतिगम्यमेव। तथाहि निर्विघ्नमितिक्रियाविशेषणाद्विघ्नध्वंसविशिष्टसमाप्तेः फलत्वे बोध्यमाने विशेषणस्यापि मङ्गलजन्यत्वं श्रुत्या बोधितं विघ्नपदस्य प्रतिबन्धकार्थतया तस्य च कारणीभूताभावप्रतियोगित्वात्मकतया विघ्नाभावस्य समाप्तिहेतुत्वमवगतमिति किमधिकमवशिष्यते द्वारत्वे बोधयितुमिति चेत् न, यदवच्छिन्नं प्रति जनकी-

आलोकः ।

यित्वा तद्द्वारा विघ्नध्वंसो द्वारं गौरवादिति मनसिकृत्याह—वस्तुत इति । श्रुतित-एव वेदादेव । पूर्वत्र कल्पे व्यापारः कल्पनीयोऽत्र तु शाब्द इति तद्भेदः । तदुक्तं वत्सेश्वरैः "वेदश्चानुमीयमानो

आलोकदर्पणः ।

समाप्तिदर्शनात् विघ्नस्थलीयसमाप्तावेव हेतुत्वं तत्र च विघ्न-ध्वंसस्यैव द्वारत्वौचित्यान्नेदं लाघवमिति भावः । ननु मङ्गलजन्यापूर्वस्य समाप्तिहेतुतायां न व्यभिचारनिश्चयः प्रमत्तादिस्थलेऽपि जन्मान्तरीयमङ्गलसंशयादित्यस्वरसाद्वस्तुत इति मूलं तत्र च विघ्नाभावद्वारकत्वे प्रतिपाद्यमानेऽपि नापूर्वद्वारत्व-बाधो लभ्यते अपूर्वं जनयित्वा विघ्नाभावजननसम्भवादित्यत आह-इति मनसिकृत्येति । विघ्नाभावस्यावश्यकत्वमेव मनसि निधायेत्यर्थः । कल्प्य इति । मङ्गलं विघ्नतत्कादाचित्काभावान्यतरजनकं विघ्नज्ञान-वतैव क्रियमाणत्वादिति सामान्यतो ज्ञाते समाप्तिकामप्रवृत्त्यनुप-पत्त्या विघ्नजनकत्वे निरस्ते प्रागभावस्याजन्यतया तज्जनकत्वे निरस्ते विघ्नध्वंसजनकत्वव्यवस्थितौ समाप्तिकामप्रवृत्त्यनुपपत्त्यैव तस्य मुख्यफलत्वे बाधिते परिशेषाद्विघ्नध्वंसद्वारकत्वमित्यर्थः । शाब्द इति । यद्यपि द्वारत्वमत्रापि कल्प्यं तथापि पूर्वत्र कल्पे द्वार-द्वारत्वयोः कल्प्यत्वमिह तु द्वारस्य शाब्दत्वमिति भेदः । मूले

आलोककण्टकोद्धारः ।

भूतो यमजनयित्वा तन्न जनयतीत्येतावदस्य तथात्वशा-ब्दत्वादवच्छेदकतांशे तदसामर्थ्यादन्यथा दण्डादेरीश्वरव्यापा-रतापत्तिरित्याशयः । ननूपोद्घातसंगत्या द्वारनिरूपणपक्षे नेदमुत्तरं युज्यते अत आह—तथाचाधिकारिद्वयेति । तथा च पूर्व-

आलोकः ।

मङ्गलं प्रारिप्सितसाधनमित्याद्याकारः, प्रकारजिज्ञासायां पारिशेष्या-त्प्रतिबन्धकदुरितक्षयरूपो ज्ञायते । यद्वा तदन्तर्भावेणैव वेदानुमान-म्" इति । किञ्चेति । तथा चाधिकारिद्वयकल्पनाभियापि नापूर्वं द्वारमित्यर्थः । नन्वपूर्वद्वारकत्वे न तत्र तन्त्रमपि त्वनपेक्षितजन-कत्वमित्युक्तं तथा चापूर्वद्वारकत्वेपि मङ्गलस्य तज्जन्यापूर्व-विलम्बेन फलविलम्बादङ्गत्वं स्यादित्यत आह-क्लृप्तेति । तद्वि-लम्बात्कार्यविलम्बोऽसिद्ध एवेति भावः । इन्द्रबाहुबन्धनवदिति । षष्ठीसप्तम्यर्थाद्वृतिः ।

आलोकदर्पणः ।

द्वारत्वपदेन द्वारमेवाभिहितम् । केचित्तु विघ्नध्वंसविशिष्टसमाप्तिं प्रति वेदेन मङ्गलस्य कारणत्वबोधनाद्विघ्नध्वंसे मङ्गलजन्यत्वं समा-प्तिजनकत्वं च संसर्गमर्यादया भासत इति शब्दादेव द्वारत्वनिश्चय इत्याहुः । प्रकारेति-द्वारेत्यर्थः । लौकिकाङ्गत्वविरोध इत्यस्या-न्वयार्थमाह षष्ठीति । तथा चेन्द्रबाहुबन्धनस्येवेत्यर्थः ।

आलोककण्टकोद्धारः ।

युक्त्या तत्रापि युज्यत एवेति भावः । तद्विलम्बादिति । स्वतःसिद्धविघ्नाभावस्थले व्यभिचारादिति भावः । यद्यपि विशेषे ऽव्यभिचारोऽस्त्येव तथापि पूर्वोक्ते दृष्टेनैवोपपत्तावदृष्टानौचित्येन तात्पर्यम् । ननु मङ्गलस्य दृष्टदुरितक्षयद्वारकत्वेप्यदृष्टमावश्यकं दृष्टार्थेपि सर्वेषु नियमाद्दृष्टमिष्यत इत्यभ्युपगमादिति चेत् न, मानाभावात्तथाभ्युपगमासिद्धेः । न चैवं नखविदलनाद्युपायान्तरेणापि दृष्टवैतुल्यादिसंभवादवघातस्यानुष्ठाननियमे विध्यानर्थक्यम् अवघातसाध्यतण्डुलत्वादिना हेतुत्वेनैव तन्नियमोपपत्तेः । अवघाते

**ननु विघ्नसंदेहे कथं तन्नाशार्थं प्रवृत्तिः दुरितध्वंसार्थिप्रवृत्तौ तन्निश्चयस्य हेतुत्वात् प्रायश्चित्तवदिति चेत्। न। विघ्नसंशये निश्चये वा नियमेन शिष्टानां मङ्गलाचाराद् विघ्नज्ञानं प्रवर्तकम्। तादृशाचारानुमितविधिनापि विघ्नज्ञानवानारब्धसमाप्तिकामोऽधिकारी**

आलोककण्टकोद्धारः।

नासाधारणोपकारानाधाने तथाहेतुत्वमेव कथं निर्वहेदिति चेत्, कल्प्यनियमादृष्टेनाप्युपकारान्तरानाधाने कथं तदावश्यकतेत्यपि ब्रूहि तथा चोपकारानवस्थाविधिबलाददृष्टविशेषस्य स्वत एव हेतुत्वमिति चेत् तर्हि तद्बलादेव दृष्टतण्डुलादिविशेषस्यैव तथा हेतुत्वमस्त्विति न क्वापि नियमादृष्टापेक्षेति तुच्छमेतत्।

विघ्नध्वंसविशिष्टा समाप्तिर्मङ्गलोद्देश्या इतिमते बाधकमाशङ्कते-**नन्विति। तन्निश्चयस्य**—दुरितनिश्चयस्य। **प्रायश्चित्तवत**—प्रायश्चित्तप्रवृत्तिवत्। ननु दुरितध्वंसार्थिप्रवृत्तावित्यादेः पापध्वंसार्थिप्रवृत्तौ पापनिश्चयो हेतुरित्यर्थः सामान्यतोऽनिष्टध्वंसार्थिप्रवृत्तौ अनिष्टनिश्चयो हेतुरित्यर्थः तदुद्देश्यकप्रवृत्तौ तदुपघायकत्वनिश्चयो हेतुरित्यर्थो वा नाद्य इत्याह— **विघ्नध्वंससंशय इति। विघ्नज्ञानं प्रवर्तकम्** विघ्नज्ञानसामान्यं प्रवर्तकम्, मङ्गल इति शेषः। तथा च पापध्वंसार्थिप्रवृत्तौ पापनिश्चयस्य हेतुत्वमेवासिद्धमिति विघ्नसंशयेऽपि मङ्गले प्रवृत्तौ बाधकाभाव इति भावः। **तादृशाचारेति**। विघ्नसंशये निश्चये वा मङ्गलाचाररूपशिष्टाचारेत्यर्थः। **अनुमितेति**। अनुमानं च मङ्गलं विघ्नज्ञानवन्मात्रकर्तव्यत्वेन वेदबोधितं विघ्नसंशयनिश्चयकालीनालौकिकशिष्टाचारविषयत्वादित्याकारकं बोध्यम्।

बोध्यते । प्रायश्चित्ते तु तन्निश्चयवान् तथैव विधिबोधनात् । अत एवाधिकारिविशेषणं विघ्न इति तत्संदेहे कथं प्रवृत्तिः, वैदिकेऽधिकारनिश्चयादेव प्रवृत्तेरित्यपास्तम् । यतः प्रधानाधिकारिण एवाङ्गेऽधिकारो न स्वतन्त्रः अङ्गत्वभङ्गप्रसङ्गात् । न च प्रधाने प्रारिप्सिते दुरितमधिकारिविशेषणं विरोधात् । किन्तु समाप्तिकामना सा तु निश्चितैव ।

यत्त्वन्यत्र निश्चिताधिकारकर्तृकत्वेपि मङ्गलं सन्दिग्धाधिकारकर्तृकमेव विघ्नसन्देहवतां शिष्टानामाचारानुमितवेदेन तथैव बोधनादिति । तन्न । विघ्नवत्त्वेनाधिकाराभावात् क्वचित्तन्निश्चयेऽपि प्रवृत्तेश्च ।

**अधिकारी कर्ता । प्रायश्चित्ते तु**—पापविशेषे तु । **तन्निश्चयवान्**—पापनिश्चयवान् । अधिकारीति शेषः । तथा च विधिना यत्र पापनिश्चयवन्मात्रकर्तव्यत्वं बोध्यते तत्रैव पापनिश्चयस्य हेतुत्वमन्यत्र तु पापज्ञानसामान्यस्येति भावः । **अधिकारिविशेषणमिति** । अधिकार इत्यर्थः । विघ्नस्य मङ्गलेऽधिकारत्वमेव नास्तीत्याह—**यत इति** । **न स्वतन्त्रः**—न प्रधानाधिकारातिरिक्तस्तदीयवैदिकाङ्गेऽधिकारः । नन्वेतावता किमायातमत आह—**न चेति** । न हीत्यर्थः । **प्रधाने**—स्वजन्यफलजनकत्वेन वेदबोधितमङ्गलके । स्वपदं प्रारिप्सितकर्मपरम् । **विरोधात्**—अधिकारत्वफलप्रतिबन्धकत्वयोर्विरोधात् । किंतर्ह्यधिकारिविशेषणमित्याह—**किन्त्विति** । **अन्यत्र**—प्रायश्चित्तविशेषादौ ।

अपि च शङ्कितानिष्टवारणार्थमपि प्रवर्तन्ते परीक्षकाः, यथा सर्पादिदंशजन्यविषसंशये तन्नाशाय भेषजपानादौ।

किञ्च फलस्य संशयेऽप्युपायत्वनिश्चयात् यथा कृष्यादौ प्रवृत्तिस्तथा मङ्गलेऽपि। यदि च वृष्ट्यादौ सति कृष्यादितोऽवश्यं फलमिति तर्कात्तत्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्तिः।

ननु स्फ्यस्य भक्ताश्लेषनिमित्तकेज्यायामिष्टित्वेन दर्शधर्मत्वे सत्यतिदेशागतपूर्वदिनकर्तव्यदेवतावाहनस्याङ्गस्य स्फ्याश्लेषद्वारसंशयेऽननुष्ठानमुक्तं यथा कृष्णले द्वारबाधे। अतो विघ्नसंशयात्तद्ध्वंसद्वारसंशये कथं मङ्गलानुष्ठानमिति चेद् न-नैमित्तिके हि निमित्तवान-

---

विघ्नवत्त्वेनाधिकाराभावादिति। अधिकारत्वफलप्रतिबन्धकत्वयोर्विरोधेन विघ्नस्याधिकारत्वाभावादित्यर्थः, अभ्युपेत्याप्याह—**क्वचिदिति**। तथा च विघ्नसंशय एव मङ्गले प्रवर्तक इति नियमोऽसिद्ध इति भावः। दुरितध्वंसार्थिप्रवृत्ताविव्यस्य द्वितीयार्थे व्यभिचारमाह— **अपि चेति**। तृतीयार्थमभिप्रेत्याह— **किंचेति। फलस्य**—फलोपधायकत्वस्य। तथा मङ्गलेऽपीति। फलोपधायकत्वसंशयेऽपि प्रवृत्तिरित्यर्थः। ननु वैदिके कर्मणि द्वारसंशये न प्रवृत्तिः अत एव 'यत् स्फ्य आश्लिष्येत् तदधोऽवमृज्यात् विष्णवे उरुक्रमाय चरुं निर्वपेत्' इत्यनेन स्फ्यस्य भक्ताश्लेषनिमित्तको यागो विहितः तस्य चेष्टित्वेन

धिकारी यथा भिन्ने जुहोतीत्यत्र पात्रभेदवान् तथेहाश्लेषवान् अधिकारीति पूर्व्वदिने आश्लेषनिश्चयाभावात्युक्तमननुष्ठानम् ।

अपि चेज्याकर्त्तव्यतानिश्चये तदङ्गानुष्ठानम् । न चाश्लेषसंशये तन्निश्चयः पूर्व्वदिने । अतः प्रधानेऽधिकाराभावान्नाङ्गेऽधिकार इति । नावाहनं पूर्व्वदिने । यदि च यदि न स्यादिति न्यायेन कुर्य्यात्तदा अनधिकृतकर्तृकत्वेन निष्फलं स्यात् । स्फ्याश्लेषे सतीज्याकर्त्तव्यतानिश्चयेपि नावाहनम्,पूर्वदिनस्याङ्गस्याभावादितीज्यायामावाहनबाध एव । मङ्गले तु विघ्नज्ञानवानधिकारीत्युक्तं तच्च संशयेप्यस्ति प्रधाने कर्त्तव्यतानिश्चयोऽस्त्येवेति द्वारसंदेहेऽपि युक्तमनुष्ठानम् । भविष्यद्विवाहादावाभ्युदयिकेऽपि तज्ज्ञानवानधिकारी तथैवाचरात् ।

---

दर्शप्रकृतिकत्वात् प्रकृतिवद्विकृतिः कर्त्तव्येतिन्यायेन दर्शधर्मातिदेशात् पूर्वदिने प्राप्तमपि देवतावाहनं द्वारस्य स्फ्याश्लेषरूपस्य संशये अननुष्ठानमुक्तं पूर्वमीमांसायाम् तथा च प्रकृते दुरितध्वंसरूपसंशये कथं मङ्गले प्रवृत्तिरिति शङ्कते—**नन्विति** । स्फ्यः खदिरकाष्ठनिर्मितः खङ्गः । **दर्शधर्मत्वे इति** । प्रकृतिवदित्यतिदेशादितिशेषः । क्वचिद् दर्शधर्मप्रहे इतिपाठः । **यथा कृष्णलइति** । 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इतिविहिते विकृतियागे प्रकृतिवदित्यतिदेशादवघातः प्राप्तः परन्तु वैतुष्यरूपस्य द्वारस्याभावनिश्चयान्नानुष्ठीयते तद्वदित्यर्थः । **कृष्णलः—सुवर्णशकलः** । परिह-

प्रगल्भी ।

विघ्नध्वंसस्य द्वारत्वे बाधकमाशङ्कते-नन्विति । अधिकारीति । विघ्नज्ञानवानधिकारीति नास्यार्थः, अग्रेतनग्रन्थविरोधात् किन्तु यस्तु विघ्नज्ञानवान् स समाप्तिकामोऽधिकारी बोध्यत इत्यर्थः । अत एवेति । पूर्वं व्याप्तिबलात्तन्निश्चयाभाव आशङ्कित इदानीमधिकारत्वबलादिति भेदः । नचेति । आत्मनिष्ठत्वे सति स्वज्ञानेन प्रवृत्तिद्वारा प्रवृत्तिविषयप्रधाननिर्वाहकत्वमेवाधिकारत्वं विघ्ने तु-वैपरीत्यमेवेति भावः । निश्चितैवेति । ननु कामना स्वरूपसती प्रवर्त्तिका न तु ज्ञाता गौरवादिति चेन्न न-कामनाया अधिकारतया कामनानिश्चयाहेतुत्वात् । शब्दप्रयोगरूपव्यवहारं प्रति-

रति--नेति । तदङ्गानुष्ठानम्---यागाङ्गदेवतावाहनानुष्ठानम् । तन्निश्चयः-इज्याकर्तव्यतानिश्चयः । प्रकारान्तरेणापि पूर्वदिने देवतावाहनाननुष्ठानमुपपादयति--अपिचेति । यदि न स्यादितिन्यायेनेति । सन्दिग्धे परलोकेऽपि त्याज्यमेवाशुभं जनैः । यदि न स्यात्ततः किं स्यादस्ति चेन्नास्तिको हतः ॥ इति न्यायेनेत्यर्थः । ननु पूर्वदिने इज्याकर्तव्यतानिश्चयाभावान्माभूद्देवतावाहनं परदिने तु स्फयाश्लेषे सति कर्तव्यतानिश्चये देवतावाहनमस्तु इत्यत आह---स्फयाश्लेष इति । नावाहनम्---उत्तरदिने इतिशेषः । ननु नैमित्तिके-निमित्तनिश्चयवान् यदाधिकारी तदा कथं विवाहादिनिमित्तसंशयेऽपि आभ्युदयिकश्राद्धानुष्ठानमित्यत आह---भाविष्यादिति । तत्राचारनिमित्तज्ञानमात्रमेवाधिकार इतिभावः । नैमित्तिके निमित्तनिश्चयवानधिकारीति नियमो वृषोत्सर्गादाविति भावः ।

प्रगल्भी ।

कामनानिश्चयस्य हेतुत्वाभिप्रायाद्वा काम्यकर्ममात्रे कामनादिनिश्चयजन्यप्रयोगस्याङ्गत्वादिति भावः । यत्तु विघ्नज्ञानरूपशब्दघटितवेदशरीरपक्षे विघ्ने विघ्नज्ञाने चाधिकारिलक्षणं गतमिति यत्तन्न मङ्गलस्य प्रागुक्तयुक्त्या अङ्गत्वव्यवस्थापनात् प्रधानरूपाविषये प्रवृत्तिप्रयोजकत्वाभावेनोक्तरूपाधिकारित्वाभावादिति दिक् । नियोज्ये सत्त्वमेवाधिकारिविशेषणत्वे तन्त्रमतो दुरितं तथा तच्च सन्दिग्धं प्रवृत्तिप्रयोजकं तथैव शिष्टाचारादित्येकदेशिमतमाह-यत्त्विति । विघ्नवत्त्वेनेति । प्रधानग्रन्थादौ विरोधादधिकारित्वाभावादङ्गेऽपि तदभावादिति भावः । व्यभिचारमाह-क्वचिदिति । विघ्नज्ञानमात्रस्य तथात्वे वाच्ये प्रागुक्तो दोषो बोध्यः । न केवलं मङ्गले ध्वंसनीयसंशये प्रवृत्तिरपि त्वन्यत्रापीत्याह-अपिचेति । यद्वा नन्वित्यादिपूर्वपक्षे एवं विकल्पनीयम । पापध्वंसार्थिप्रवृत्तौ पापनिश्चयस्य हेतुत्वम उतानिष्टध्वंसार्थिप्रवृत्तावनिष्टनिश्चयस्य हेतुत्वम । आद्ये उक्तं विघ्नस्य संशयस्येत्यादि । द्वितीये आह-अपि चेति । ननु फलावश्यम्भावनिश्चये सत्येव प्रवृत्तिः विघ्नसंशये च न तद्ध्वंसनिश्चयः तदनिश्चये च न समाप्तिरूपफलनिश्चय इत्येवं नन्वित्यादिपूर्वपक्षाशयस्तत्राह-किञ्चेति । द्वारसंशय इति । मध्यवर्त्तित्वसाधर्म्यात द्वारत्वमुक्तं न तु तज्जन्यत्वे सतीत्यादिरूपं दृष्टान्ते तदभावात । यथेति । कृष्णले सुवर्णमाषे । द्वारबाध इति । अतिदेशप्राप्तावघातस्य वैतुष्यरूपद्वारबाधेना-

प्रगल्भी ।

नुष्ठानं यथेत्यर्थः । अतः प्रधान इति । प्रधानकर्तव्यतानिश्चयाभावान्नाङ्गे पूर्वदिने प्रवृत्तिरित्यर्थः । यत्तु प्रधानकर्त्तव्यतानिश्चयाभावान्नाङ्गेऽधिकार इति । तच्चिन्त्यं–प्रधानकर्त्तव्यतानिश्चयस्याधिकारत्वाभावात् । न हि प्रधानकर्त्तव्यतानिश्चयस्य निश्चयं प्रवृत्तिरपेक्षते येन तस्याधिकारत्वं स्यात् । यदपि पूर्वकसमाधाने अत इत्यादेरन्वय इति तदपि न तस्य युक्तमित्यनेन निराकाङ्क्षत्वात् । नन्वेवमुक्तन्यायेन श्वः कर्त्तव्यपितृश्राद्धादिकर्त्तव्यतासंशये पूर्वदिवसे ब्राह्मणनिमन्त्रणादिरूपाङ्गकरणं न स्यादिति चेन्न–तत्र मानसतर्कादिना संशयनिरासे सति प्रधानकर्त्तव्यतानिश्चयसम्भवादिति दिक् । पूर्वदिनस्येति । नन्वेवमेकादशाहे वृषोत्सर्गादौ कर्त्तव्ये पूर्वदिने तदङ्गानुष्ठानं न स्यादाशौचसत्त्वात् न परदिने तदङ्गस्य कर्त्तव्यतापूर्वदिनरूपस्याङ्गस्याभावादितिचेत् न–येन हि विधिना एकादशाहे वृषोत्सर्गादिकं विहितं तेनैव विधिनार्थाद् दशमदिवसेऽपि शौचविधानादिति भावः । मङ्गले तु द्वारसंशयेऽप्यधिकारं दर्शयति– मङ्गले त्विति । स्ववृत्तिविघ्नज्ञानवान् यः समाप्तिकामनावत्त्वेनाधिकारीत्यर्थः । एतेन विघ्नज्ञानस्याधिकारत्वदर्शनं विरुद्धमित्यपास्तम् । तदधिकारदर्शनपरत्वाभावात् उक्तप्रकारेण कृष्णलस्थलोक्तबाधकमपि निराकृतं बोध्यम् । ननु नैमित्तिके निमित्तवानधिकारीत्युक्तं तदयुक्तम् विवाहादिनिमित्तसंशयेऽपि नैमित्तिककर्मानुष्ठानादित्यत आह भविष्यदिति । आचारादिति । इदानीं तादृशप्रत्यक्षवेदाभावादिति भावः ।

आलोकः ।

**दुरितेति** । यद्यपीदं शौचाचमनादिलक्षणदुरितध्वंसहेतुक्रियाप्रवृत्तौ व्यभिचारि तथापि दुरितज्ञानमात्रवदनाधिकारिकतदर्थिक्रियात्वादिति विवक्षितम् । शौचादौ तत्संशयेपि बोधनात् । **तज्ज्ञानमात्रमधिकार इति** । हेत्वभावादेव न व्यभिचार इति भावः । **विघ्नसंशयेति** । तथा चात्रापि विशेषणासिद्धिरिति भावः । विरोधा-

आलोकदर्पणः ।

तज्ज्ञानमात्रमधिकार-इति । प्रवृत्तिप्रयोजकमित्यर्थः । अन्यथा तन्नि-श्चयहेतुत्वापत्तेरित्यवधेयम् । केचित्तु स्वविशेषणवत्ताप्रतिसन्धान-जन्यकार्यत्वज्ञानानुरोधेन परमते सर्वेषामधिकारिविशेषणानामवश्य-निश्चयत्वेऽपि नैयायिकमते न तथा प्रवृत्तिं प्रति साक्षादनुपयोग्य-धिकारिविशेषणस्यैव निश्चयापेक्षणात् । ज्ञानकामनादीनां तु साक्षा-देवोपयोगादिति यथाश्रुतमेवाहुः । तन्न । समाप्तिकामनाऽधिकारि-विशेषणं सा च निश्चितैवेतिग्रन्थविरोधात् । अतएवेत्यादिमूले वैदिके-ऽधिकारिविशेषणनिश्चयस्यावश्यकतया विघ्ननिश्चय आनीयते । पूर्वं तु दुरितध्वंसार्थिप्रवृत्तिं प्रति दुरितनिश्चयस्य हेतुत्वेनेति भेदः । तथाचात्रापीति । शौचाचमनादाविव दुरितज्ञानमात्रवदना-धिकारिकत्वे सतीति विशेषणासिद्धिर्मङ्गलेऽपीत्यर्थः । पुरुषविशेषण-तया निश्चितस्य प्रवृत्तिद्वारा फलहेतुत्वमधिकारित्वं तच्च विघ्ने न सम्भ-वतीत्याह—फलहेतोरिति । सा च निश्चितैवेति मूलम् । यद्यपि स्वरूप

आलोककण्टकोद्धारः ।

सा तु निश्चितैवेति मूलम् । कामनाभिलाषस्य काम्य आवश्यकतया तन्निश्चयो हेतुरित्युक्ते कामनाज्ञानापेक्षेत्यभिप्रायेणेदं लाघवादधिकारि-मात्रनिश्चयस्य प्रवर्तकतया कामनाज्ञानमपि तथेत्याहुः । पापनाशार्थि-

आलोकः ।

दितिफलहेतोरधिकारितयाऽधिकारित्वं प्रतिबन्धकत्वं च विरुद्धमित्यर्थः । अपिचेति । अनिष्टतावच्छेदकरूपावच्छिन्नसंशयेपि प्रवृत्तिर्दृश्यते । तत्रोक्तव्याप्तेर्बाधकत्वं परोक्तमसंभावि दुरितध्वंसत्वेनोद्देश्यत्वे तद्व्याप्तेः, इह तु प्रारिप्सितप्रतिबंधकध्वंसत्वं तच्चादृष्टतदन्यसाधारणमित्यर्थः । स्फुटयाश्लिष्टेज्याधिकरणाविरोधं शङ्कते । नन्विति । यत्स्वय

आलोकदर्पणः ।

सत्या कामनया प्रवृत्तिसम्भवे किमर्थं तन्निश्चयधावनं तथाप्यधिकारिविशेषणत्वमेव प्रवृत्तिजनकनिश्चयविषयतावच्छेदकमुक्तरीत्या निश्चयघटितमेवाधिकारिविशेषणत्वमिति भावः । निश्चितत्वफलहेतुत्वांशावपहाय पुरुषगतत्वेन ज्ञातस्य प्रवर्त्तकत्वमधिकारित्वमितिमन्यमानस्य मतं यत्त्विति मूले निबद्धम् । क्वचिदिति मूलम् यथाश्रुते ज्ञानसामान्यप्रयोजकतायां विवक्षितायां पूर्वोक्तमेव द्रष्टव्यम् । नन्वपिचेतिमूलमसङ्गतं दुरितध्वंसार्थिप्रवृत्तौ दुरितनिश्चयहेतुत्वस्य पूर्वपक्षितत्वादत आह –अनिष्टेति। तत्र-दर्शने सति । असम्भावि-अप्रयोजकत्वादिति भावः । नन्वनौपाधिकत्वमेव विपक्षबाधकं स्यादत आह– दुरितेति। दुरितध्वंसत्वनियतधर्मप्रकारकेच्छापूर्वकत्वमुपाधिरित्यर्थः । प्रारब्धप्रतिबन्धकध्वंसत्वमुद्देश्यतावच्छेदकमिति शेषः। अदृष्टतदन्येति । अदृष्टतदन्यध्वंसेत्यर्थः । वस्तुतो ननु विघ्न-

आलोककण्टकोद्धारः ।

प्रवृत्तौ नेदं युज्यते इत्यत आह–अनिष्टतावच्छेदकेति । ननु तथापि फलसंदेहादेव न विघ्नसंदेहेऽप्रवृत्तिः स्यादत उक्तं मूले-अपिचेति । उपायत्वनिश्चयादिति । बह्वायाससाध्याभिप्रायम् अन्यत्र, वैद्याभासोक्तभेषजादावनुपायतासंदेहेऽपि प्रवृत्तेरितिध्येयम् । मूले, इष्टिरित्यत्र दर्शपदं पौर्णमासस्याप्युपलक्षणम् इष्टिस्तु दर्शपूर्णमासयोरिति जैमिनिवच-

आलोकः ।

आश्लिष्येत्तदधोऽपमृज्याद्दिक्षणत उरुक्रमाय चरुं निर्वपेदित्यादिना विहितस्य स्फाश्लिष्टेज्यादेर्दर्शपौर्णमासप्रकृतिकत्वेन प्रकृतिवद्विकृतिरित्यतिदेशप्राप्तेर्दर्शधर्मग्रहे तदङ्गदेवतावाहनस्य पूर्वदिनेऽननुष्ठानमित्यर्थः । यथेति । व्रीहीनवहन्तीत्यादौ व्रीहिपदस्य यवादिसाधारण्यार्थमजहत्स्वार्थलक्षणया नियोगसाधनीभूतद्रव्यमात्रपरत्वे कृष्णलं श्रपयेदिति श्रुत्या नियोगसाधनत्वेन बोधितकृष्णलस्यापि तत्प्राप्तौ वैतुष्यद्वारबाधेनावघातबाधो यथा तथेत्यर्थः । कृष्णलः स्वर्णपापः । न च कृष्णले अवघातबाधे तद्विकृतौ नीवारेऽपि बाधापत्तिः । कृष्णलेऽवघातबाधेऽपि तत्प्रसङ्गाबाधात् । वस्तुतस्तु कृष्णलविकृ-

आलोकदर्पणः

संशय इत्यादिपूर्वपक्षे विकल्पनीयं किं पापध्वंसार्थिप्रवृत्तौ पापनिश्चयस्य हेतुत्वमुत सामान्यत एवानिष्टध्वंसार्थिप्रवृत्तौ अनिष्टनिश्चयस्य हेतुत्वमिति । आद्ये विघ्नसंशय इत्यादिमूलम् । द्वितीयेऽपि चेति मूलम् । ननु फलावश्यम्भावनिश्चयः प्रवर्त्तकः विघ्नध्वंसात्मकद्वारसन्देहे च स नास्तीत्याशङ्कायां मूलं—किञ्चेति । स्पयः स्वादिरः खड्गः । नियोगोऽदृष्टम् । तत्प्रसङ्गाबाधादिति । प्रकृतिप्रस-

आलोककण्टकोद्धारः ।

नादिति भावः । पूर्वदिनेति । पूर्वकालेत्यर्थः । अग्नेर्यथं पूर्वमुर्द्घताः परिगृह्णातीति विहितदेवतापरिग्रहपरं वाऽवाहनपदं तदिह न तत्र सामिधेन्यनुवचनानन्तरमावाहनविधानादिति द्रष्टव्यम् । यत्त्वावाहनपदमन्वाधानार्थमिति, तन्न, नैमित्तिके नियतदर्शाद्यङ्गानुष्ठानेनैव प्रसङ्गात् साधारणाङ्गसिद्धिस्वीकारात्तदननुष्ठानासिद्धेः । यवादीति । आकाङ्क्षाया उभयत्राविशेषादिति भावः । यद्यप्याकाङ्क्षारूपप्रकरणा-

आलोकः ।

तित्वेपि नीवारस्य नावघातबाधः । तथा हि । न तावत्प्रकृतिवद्वि-
कृतिरित्यतिदेशः सर्वधर्माणां सर्वयागानां दर्शपौर्णमासात्मकतापत्तेः
किं त्वनुपदिष्टयावद्धर्मातिदेश एवं चाहत्स्वार्थलक्षणया व्रीहियव-

आलोकदर्पणः ।

क्रमात्रेण विकृतावतिदेश इति भावः । सर्वयागानामिति—सर्वासामि-
ष्टीनामित्यर्थः । तासां दर्शपूर्णमासप्रकृतिकत्वादिति भावः । सामाना-

आलोककण्टकोद्धार ।

पेक्षया श्रुतेर्बलवत्त्वान्न तेन तस्याः श्रुतार्थत्यागः यवेऽवघातानु-
पदेशेऽपि पुरोडाशप्रकृतितया लौकिकेनैव केनचिदुपायेन वितुषी-
करणोपपत्तेर्यवसाधारण्याभावेपि दोषाभावात्, तथापीष्टसाध-
नतारूपविधेरिष्टतावच्छेदकावच्छिन्नभाव्यमात्रापेक्षा तच्चोपस्थित-
परमापूर्वसाधनसामान्यमिति तावदेव व्रीहिशब्दार्थो न तु व्रीहित्व-
मनपेक्षितत्वात् अन्यथा व्रीहित्वस्योद्देश्यतावच्छेदकत्वं मानान्तरा-
प्राप्तं शास्त्रेणैव बोध्येतेति वाक्यभेदापत्तेः । अपूर्वीयत्वमात्रस्य
तदवच्छेदकत्वं मानान्तरलभ्यम् । अतएव येन केनापि धर्मेणोद्देश्यत्व-
पर्य्याप्तौ न तस्य विशेषणान्तरं शक्यं वाक्यभेदापत्तेरिति तान्त्रिकाः ।
अत एव च स्वाध्यायोऽध्येतव्य इत्यत्र श्रुतमपि स्वाध्यायत्वमतन्त्रीकृत्य
इष्टेऽष्टत्वमर्थज्ञानादिसाधारणं अध्ययनभाव्यतावच्छेदकमिति नाक्षर-
ग्रहणमात्रार्थोऽध्ययनविधिरित्यध्ययनाधिकरणे सिद्धान्तः ।
किंच न व्रीहिस्वरूपे अवघातविधानमानर्थक्यात, किन्तु प्रकरणि
तया ग्राहकापूर्वगृहीतस्यावघातस्य साक्षादसम्बन्धात् द्वारा-
पेक्षायां तण्डुलादिनिष्पत्तिप्रणाड्या अपूर्वसाधनमात्रमपेक्षितम् नतु
व्रीहित्वाद्यपि तत्र प्रविशति मानाभावादिति यवसाधारणेन साधनमात्रे
अवघातविधिः । अन्यथा व्रीहेर्द्वारत्वे नीवारादावतिदेशेन प्राप्तोप्यव-

आलोकः ।

कृष्णलनीवारादिषु तु लाघवादेवावघातविधिरिति इहापि नावघातातिदेशः साक्षादुपदेशात् । तथा च प्रकृतावबघातबाधेऽपि विकृतौ न तद्बाधः प्रकृतिविकृतिन्यायप्राप्तस्यैव प्रकृतिबाधे विकृतिबाधात् । ननु नियोगसाधनीभूतसतुषद्रव्यत्वेनाजहत्स्वार्थलक्षणास्तु तथा चा प्रसङ्ग एव न तु बाधः । निषेधस्य प्रसङ्गपूर्वकत्वात् । मैवम् । व्रीहिभिर्यजेत व्रीहीनवहन्ति व्रीहीन्प्रोक्षतीत्यत्र यागावघातप्रोक्षणानां सामानाधिकरण्यमनुभूयते तत्तुल्यप्रकारोपस्थितिं विना न संभवति । न वा

आलोकदर्पणः ।

धिकरण्यमिति । एकधर्मावच्छिन्नान्वयित्वमित्यर्थः। अनुभवं विवादादाह—नचेति। नियोगसाधनद्रव्येण यागः कथमित्याकाङ्क्षायां नियोगसाधनसतुषद्रव्यमवहन्तीति नाकाङ्क्षिताभिधानमित्यर्थः । व्यतिरेकनिश्चयो द्वारव्यतिरेकनिश्चयः । कृष्णल उदाहरणं प्रदर्शनस्थलम् । देवतावाहनमुदाहरणं दृष्टान्तः। तदयमर्थः--यद्व्यतिरेकनिश्चयइत्यादि-

आलोककण्टकोद्धारः ।

घातो द्वारबाधेन बाध्येत । न च प्रकृतापूर्वीयत्वविवक्षायामप्ययं दोषः स्वसाधनस्य सर्वत्र द्वारत्वपर्यवसानात्, नचैवमाज्यौषधस्य सान्नाय्यधर्म्माणां ग्राहकपरमापूर्वैक्यात् संकरापत्तिः तत्रान्तरपूर्वाणामवान्तरप्रकरणीयत्वात् तथापि पृष्ठाख्यस्तोत्रे एकस्मिन् यैकल्पिकसाम्नोः रथन्तरे स्तूयमाने सम्मीलयेत, बृहति स्तूयमाने समुद्रं मनसा ध्यायेदिति पृथग्गृहीतधर्मयोः संकरापत्तिरिति चेन्, तत्र साम्नोः पृथग्ग्रहणेन साधनरूपत्वम् बृहदादिरूपस्यापि विवक्षितत्वेन व्यवस्थोपगमात् । अन्यथान्यतरग्रहणवैयर्थ्यात्, व्रीहिपदेनैवैकेनैव साधनरूपोपलक्षणसम्भवात् यदाहुः ' साम्नोर्यव्यस्थया

आलोकः ।

साकाङ्क्षत्वं वेत्येकप्रकारोपस्थितिर्वाच्या न वा प्रोक्षणादावपि सातुर्ष्यं-तन्त्रमित्येकत्र सातुष्यप्रवेशेऽवघातेऽपि न तत्प्रवेश इति प्रसङ्गसंभवे बाध एवेति तत्त्वमिति । यद्यप्युदाहरणयोर्द्वयोरपि साध्यवैकल्यं प्रथमे संशयोस्ति न द्वारगोचरः किंतु निमित्तगोचरः द्वितीयेऽस्ति द्वारगो-चरो न तु संशयः किं तु बाधः तथापि यद् व्यतिरेकनिश्चयः प्रतिबन्धक इत्यत्र कृष्णल उदाहरणं तस्य निश्चयत्वेन न प्रतिबन्धकता किंतु ज्ञानत्वेन यद्विरहनिश्चयो यत्र प्रवृत्तिप्रतिबन्धकस्तत्र तत्संशयोऽपीति

आलोकदर्पणः ।

व्याप्तिग्रहार्थं देवतावाहनं दृष्टान्त उक्तः ततश्च द्वारसंशयः प्रति-बन्धकः प्रतिबन्धकीभूतव्यतिरेकनिश्चयसमानविषयकसंशयत्वादित्य-नुमाने विशेषणांशसत्त्वप्रदर्शनार्थं कृष्णलप्रदर्शनमिति । वाकारश्च मूले प्रामादिक इत्यवधेयम् । वस्तुतस्तु—मूले ज्ञातप्रयोजकमध्य-वर्त्तिव्यतिरेकज्ञाने पूर्वकर्मणोऽनुष्ठानमित्यत्र दृष्टान्तद्वयम् । तेन क्वचिद्वाकारोऽपि सङ्गच्छत इति । नैमित्तिके हीत्यादिग्रन्थेन पूर्वोक्त-

आलोककण्टकोद्धारः ।

यस्मान्निर्देशो मीलनादिषु । तस्मान्न संकरो युक्तो नत्वेवं प्रोक्षणा-दिषु ॥ इति पृथग्योगेपि तत्र भेदाङ्गीकाराच्च । नचैवमृगादिसाधारण्यं उद्देश्यविशेषणव्रीहित्वानुपादानेपि साधनताविशेषोपादानात् एकत्वा-नुपादानेपि चमसव्यावर्तकग्रहत्वोपादानवत् । अन्यथा देशकालादि साधारण्येनोद्देश्यत्वापर्यवसानात् अत एवार्तिमात्रस्य सदातनत्वेन निमित्तत्वापर्यवसानात् । तत्पर्यवसानाय हविर्विवक्षायामपि पर्यव-सिते निमित्ते विशेषणमुभयत्वं विध्यनाकाङ्क्षितत्वादविवक्षितमेवेति सिद्धान्तः । नचैवं ग्रहेष्वपूर्वीयत्वमात्रं लक्ष्यं स्यादिति चमससाधार-

आलोककण्टकोद्धारः ।

ण्यापत्तिः ग्रहैर्जुहोत्यादिविधिना तस्य साधनतावच्छेदकत्वबोधादुद्देश्यतावच्छेदकत्वलाभेऽप्यनाकाङ्क्षितत्वादिति वाच्यम् । तत्र होमभेदादपूर्ववैजात्येन तदीयत्वेनैव चमसत्वावच्छेदाविष्टत्वात्, व्रीहियवयोरुक्तवैकल्पिकत्वेनैकधर्मावच्छेदेन हेतुत्वादपूर्वविशेषीयत्वमुभयसाधारणमेवेति भेदः । वैकल्पिकयोस्तु पृथक्कारणत्वे कर्मभेदादपूर्ववैजात्यावश्यकत्वे कथमिदमिति चिन्त्यम् । अत एव न साकुल्यमप्युपादेयमिति रहस्यविदः । नन्वेवं 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रेऽप्यनुष्ठेयप्रकाशकतयोक्तार्थतापत्तौ यवसाधारण्यापत्तिः सामान्यरूपेणापि विशेषप्रकाशनसम्भवात्, प्रकृते तु उद्देश्यविशेषानुपस्थितौ विध्यपर्य्यवसानादिति वैषम्यम् । यद्यपि नीवारचरुर्न-कृष्णलविकृतीष्टिपु दर्शपूर्णमासयोरिति वचनात् तथाप्येतादृशोदाहरणान्तराभिप्रायेणाभ्युपेत्य सिद्धान्तयति कृष्णले अवघातबाधेऽपीति । यागावघातेति । यागीयानामवघातप्रोक्षणानामित्यर्थः । यागविधौ व्रीहिपदस्य मुख्यार्थत्वेन प्रकारभेदावश्यकत्वात् सामानाधिकरण्यं कर्मकृतम् । नन्विति । यस्यैवावघातो विहितस्तस्यैव तत्कथंभावाकाङ्क्षायां प्रोक्षणविधिर्नान्यस्येत्यर्थः । न च प्रोक्षणादावपीति । न चावघाते तत्प्रवेशात् प्रोक्षणेऽपि तत्प्रवेशोऽस्त्विति वैपरीत्यमेव किन्न स्यादिति वाच्यम् प्रोक्षणविधेः प्राथमिकत्वात्तदनुरोधेनोदीच्यनयनान्नृत्तरानुरोधेन प्राच्यस्यान्यथाकरणमिति नव्याः । तन्न, प्रोक्षणस्य प्रथमभावेऽप्यवघातविधेरेव प्रथमप्रवृत्तेः तथैव व्याख्यानात्-व्याख्यानात् प्रोक्षणमवघातजनकमित्यादावाकरस्य तत्र साक्षित्वाच्च । तस्मात् गौरवात् न साकुल्यप्रवेश इत्यत्र तात्पर्यम् । नन्वेवं द्रव्यत्वमात्रस्य लक्ष्यं तत्वधिकं अनतिप्रसङ्गकत्वात्, प्रामाणिकं गौरवमिति यदि तदा प्रकृतेऽपि तुल्यमिति चेत्, न, आकाङ्क्षानुरोधेन तत्प्रवेशस्य आवश्यकत्वात्, भवति हि व्रीहिभिर्यजेतेत्युक्ते यागोपयुक्तद्रव्यस्य

आलोककण्टकोद्धारः ।

कथमदनीयतेत्याकाङ्क्षा ननु द्रव्यमात्रस्येति । न चैवं प्रकृतनियोगसाधन एवाकाङ्क्षेति न कृष्णलादिसाधारणता नीवारादावविधानेन तत्साधारणाकाङ्क्षाया अवश्यमुत्थाप्यत्वात्, तस्मान्नाकाङ्क्षायाः प्रकृतमात्रविषयत्वं द्रव्यमात्रविषयता वेति न तादृशो धर्मो लक्ष्यत इति भावः। नन्वेवं कृष्णलेप्यवघातस्यौपदेशिकत्वात्तत्र तदावश्यकत्वे औपदेशिके च पदार्थानुसारेणोपकारकल्पनस्य सिद्धान्तत्वात् दृष्टद्वाराभावे प्रोक्षणवददृष्टार्थत्वं स्यादिति चेत् न सामान्यश्रुतावपि लाघवात्, दृष्टद्वारकत्वसिद्धौ विशेषे तात्पर्य्यात् स्वर्गकामादिपदवत्, यदाहुः "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना । विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यतीति" भाट्टाः यत्नरूपावघातानुष्ठानबाधेऽपि नावघातबाध इत्यननुष्ठितोऽपि स कृष्णले अङ्गमेवेति प्राभाकराः । एतच्च सम्भवप्राचुर्य्याद् व्याख्यातम् । वस्तुतस्तूत्कृष्टभाव्याकाङ्क्षाबलात् व्रीहिपदस्य प्रकृतापूर्वीयद्रव्यपरतैव अतिदेशात्तु कृष्णले तत्प्रसङ्ग इति मूलार्थो युक्तः सर्वमीमांसासंवादात् । अत एव न कृष्णले अपूर्वोपकारकल्पना प्राकृतोपकारातिदेशपुरोधानेन पदार्थातिदेशस्वीकारात् अन्यथा प्रयोगभेदेन दृष्टादृष्टोभयार्थत्वस्याविरोधादत्रापि तदापत्तेः, अत एव पत्नी सन्नह्येतिमन्त्रस्यैकवचनस्य साधारण्येनोपदेशादेकपत्नीकयजमानके दृष्टार्थत्वेपि बहुपत्नीकेऽदृष्टार्थत्वमेवेति नवमे सिद्धान्तितम् । नन्वेवं कथमयं प्राप्तबाधस्तथाहि अतिदेशो हि न पदार्थानां साक्षादेव किन्तूपकारातिदेशत्वादिति सिद्धान्तः, न चावघातोपकारो वैरूप्यं कृष्णले बाधितमतिदेष्टुं शक्यत इत्यप्राप्तबाधत्वान्नायं दाशमिको भवेदिति चेत्-न, उपकारसामान्यातिदेशस्य तद्द्वारकपदार्थसामान्यातिदेशस्य च द्वारबाधेनेतरपरत्वेन संकोचादौपदेशिकाहवनीयादिबाधवदस्यापि प्राप्तबाधत्वात् । उक्तं-'साधारणस्य शास्त्रस्य विशेषविषयादिना । संकोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते, इति

आलोकः।

व्याप्तेस्तत्र देवतावाहनमुदाहरणमिति मन्तव्यम्। तदुक्तं वर्द्धमानेश्वरेण "द्वाराभावनिश्चय इवाप्रवृत्तेः" इति। यद्विरहनिश्चय इत्यादिव्याप्तेः कृष्यादिप्रवृत्तावेव व्यभिचाराद्भङ्ग इति निमित्तसंशयत्वेन प्रतिबन्धकत्वं वाच्यं नचेह तत्संभवतीति मतमभिकृत्य निमित्तसंशये प्रवृत्त्यभावमुपपादयति—नैमित्तिके हीति। आश्लेषानिश्चयाभावादित्यत्र

आलोकदर्पणः।

व्याप्तेरबाधनादसङ्गतिमाशङ्क्याह—यद्विरहेति। प्रवृत्त्यभावमिति। तद्व्याप्तिभङ्गे नैमित्तिकेऽपि निमित्तसंशयदशायां प्रवृत्तिः स्यादित्याशङ्क्य प्रकारान्तरेण तत्र प्रवृत्त्यभावमुपपादयतीत्यर्थः। प्रधाने-नैमित्तिके, भक्ताश्लेषरूपं निमित्तमधिकारः प्रधानाधिकारिण एव चाङ्गेऽधिकार इति देवतावाहनेऽपि भक्ताश्लेष एवाधिकारः तस्य पूर्वदिनेऽसत्त्वाद्देवतावाहनस्याननुष्ठानमिति 'नैमित्तिके हि' इति मूलस्यार्थः। नन्वेवमाश्लेषाभावादित्येव वक्तव्ये निश्चयग्रहणं किमर्थमित्यत आह—निश्चयेति। यथाऽधिकाराभावो बाधकस्तथाऽधिकारानिश्चयो

आलोककण्टकोद्धारः।

रहस्यम्। अप्राप्तबाधकलिङ्गादिकल्प्यप्रापकश्रुत्यादिप्रमाणकल्पनाबाधस्तार्तीय इत्यसंकरः। यत्रापीति। अत्र द्वारपदं प्रवृत्त्यौपयिकपरम तथा च यदनिबन्धनकर्तव्यताकं तत् तत्संशये व्यतिरेकनिश्चये च न क्रियते इत्युदाहरणाभ्यामुच्यते इति केचिदाहुः। तन्न फलनिमित्तसाधारणप्रवृत्त्यौपयिकत्वस्यानुगतस्यानिर्वचनादिति। वस्तुत आश्लेषद्वारा—तत्संशयद्वारा, संशये—आवाहनप्रयोजनसंशये इति मूलार्थः। आवाहनं हि देवतास्मृतिप्रयोजकं प्रयोजनत्वं च तस्या यद्यपि तद्देवतेष्टिस्तदेव इष्टिश्च भाव्याश्लेषसंदेहे न संदिग्धेति प्रयोजनानिश्चयात्

आलोकः ।

निश्चयग्रहणमधिकारानिश्चयार्थम् । वस्तुतो निश्चयपदमयुक्तमधिकाराभावस्यैव सम्यक्त्वादिति ध्येयम् । नन्वेवं क्षयाहानिमित्तकश्राद्धादावपि नैकवारभोजनादेरङ्गस्य प्रसङ्ग इत्यस्वरसादाह—अपि

आलोकदर्पणः ।

भावोऽपीति स एवोपात्त इति भावः । एवं सति प्रयासगौरवादाह—वस्तुत इति । आश्लेषाभावात्तन्निश्चयाभावादिति हेतुद्वयमिहाभिप्रेतमिति तत्त्वम् । नन्वेवमिति । प्रधाने क्षयाहस्य निमित्ततया तदङ्गैकभक्तेऽपि तस्याधिकारत्वात्तदभावेऽनुष्ठानं न स्यादित्यधिकारासत्त्वप्रयुक्तेऽननुष्ठाने दोष इत्यर्थः । अपिचेतीति । शुद्धत्वविहितकालजीवित्वरूपसामान्याधिकारिविशेषणवता मयाऽवश्यमिदं कर्त्तव्यमित्येवंरूपनिश्चयस्य श्राद्धादौ मनसा सम्भवादिति भावः । मूलेऽधिकाराभावात्—कर्त्तव्यतानिश्चयाभावात् । नाङ्गेऽधिकारो नाङ्गानुष्ठानमित्यर्थः । अन्यथा कर्त्तव्यतानिश्चयस्याधिकारत्वे तन्निश्चयस्य प्रवर्त्तकत्वापत्तेः । न च पूर्वोक्तनिमित्तरूपाधिकाराभावोप-

आलोककण्टकोद्धारः ।

पूर्वमावाहनम् । तत्र च यथा कृष्णल इति दृष्टान्तः, तथा च शावरभाष्ये प्रयोजनसंदेहेऽपि कथं न क्रियते इति चेत् प्रयोजनबाधे कृष्णले अवघातादिति सुस्थम् । वस्तुत इति । यद्यपि स्वरूपसन्नधिकाराभावो अननुष्ठाने व्यभिचारी तथापि राजाज्ञादिना करणे तन्निश्चयाभावोऽपि व्यभिचारीति सफलानुष्ठानाभावः साध्य इत्याशयः । अभावादित्युभयान्वयीति हेतुद्वयमिति नव्याः । क्षयाहेति । तथाच नैमित्तिके प्रधाने नतु तत्पूर्वाङ्गेऽपीतिभावः । अपिचेतीति । यद्यपि पूर्वं प्रधाने कर्तव्यतानिश्चयः क्वापि नास्ति मानाभावात् अंशतोऽशौचा-

आलोकः।

चेति। वस्तुतः स्फ्याश्लिष्टेज्यया समं साम्यमेव न। तथा हि सा हि विकृतित्वेनैव प्रकृतिधर्मग्राहिणी प्रकृतौ चावाहनं निश्चिताधिकारिकर्तृकमेवोपकारकं ज्ञातमिति तद्बाधे बाध एव न्याय्यो न पुनः कल्पनान्तरम्। मङ्गले त्वधिकारो न प्रकृतिविकृतिन्यायलभ्यः। किंतु कल्पनान्तराधीन एवेति संशये सत्यप्यधिकारः कल्प्यते कल्पनान्तरावश्यकत्वादाचाराविरोधाच्चेति।

आलोकदर्पणः।

संहारोऽयम्, युक्तमननुष्ठानमित्यनेनैव तदुपसंहारादिति। पूर्वदिनस्येति मूलम्। यद्यपि यत्किञ्चिदङ्गहानेरुभयत्र साम्ये साक्षादङ्गदेवतावाहनबाधापत्त्याऽङ्गाङ्गपूर्वदिनबाधस्यौचित्याद्देवतावाहनमङ्गत्येव तथाप्यधिकृतस्य किञ्चिदङ्गहान्यापि कर्मनिर्वाहः कालहानौ तु नाधिकृतत्वमस्ति कालस्याधिकारिविशेषणत्वादित्यत्र ध्येयम्। अधिकारीति मूलम्। अनुष्ठातेत्यर्थः। ननु चेष्टौ देवतावाहनमङ्गमित्यत्र यथेष्टिपदं स्फ्याश्लिष्टेज्यातिरिक्तयां तथा पूर्वदिने देवतावाहनमित्यत्र देवतावाहनपदं स्फ्याश्लिष्टेज्यादेवतावाहनातिरिक्तपरमस्तु, मैवम्। प्रथमे लाघवादिति।

आलोककण्टकोद्धारः।

दिसन्देहात् तथापि राजदैवकृतदोषानुपनिपाते सर्वथा मयेदं कर्तव्यमिति मानसनिश्चयः सर्वत्राङ्ग प्रवर्तकः अन्यादृशस्यासम्भवात् स च निमित्तसंदेह क्वापि नास्तीति भावः। अतः प्रधाने अधिकाराभावादित्यनन्तरं मूले चः पूरणीयः। पूर्वदिनस्याङ्गस्याभावादिति मूलम्। सामिधेन्युत्तरकालस्येत्यर्थः। न च सामिधेन्यनुवचनमपि तदङ्गत्वेन पुनः क्रियतामिति वाच्यम् वैश्वदेवनन्त्रमध्यपातात् तदङ्गा-

आलोककण्टकोद्धारः।

नुष्ठानेनैव प्रसङ्गात्तत्सिद्धेः अत एव साधारणमङ्गं प्रसङ्गात् सिद्ध-समाधारणं तु कालाभावान्नानुष्ठेयमिति नैमित्तिके प्रधानमात्रानुष्ठान-मिति सिद्धान्तः। यदुक्तं 'अन्यतन्त्रे समारब्धे यत्रान्यस्य विधिःश्रुतः। तत्र प्रसङ्ग'इति। यद्यप्येवमनङ्गस्याफलतापत्तिः तथापीति नेदं काम्यम् किन्तु नैमित्तिकं तत्र च सर्वशक्तिन्यायेनाशक्यानुष्ठानाङ्गहानमन्यत्रापि दाशमिकन्यायेन बाधितानामनङ्गत्वात्तद्धानं च न दोषायेति भावः। ननु साक्षादङ्गस्यावाहनस्यानुष्ठानसम्भवेन तदङ्गकालस्या-शक्यसम्पादनतयोक्तन्यायेन तस्यैव बाधोऽस्तु नत्वावाहनस्य। न च देशकालरूपाङ्गयोरनुपादेयतया न कर्मोद्देशेन विधानं किन्तूद्देश्ययो-स्तयोः कर्म विधेयम्, तथा च न कर्मानुरोधेन तद्द्वयोपादानं किन्तु प्राप्तयोस्तयोः कर्मानुष्ठानं शास्त्रार्थ इति प्रतीक्षणीययोस्तयोस्तदुभयन्यायाविषयत्वेन वचनमात्रापादनीयत्वं नहि दर्शे अशक्यं श्राद्धं प्रतिपदि कार्यम् नापि गयायामशक्यं पिण्डदानं स्वगृहे, अत एव सांतापनीये-ष्टिर्मध्यंदिनकार्या तदारब्धत्वाद् दैवात् सायंकलमनुप्राप्तापि न तत्-कालीनमग्निहोत्रं स्वकालं त्याजयति किन्तु एव मानान्तरेण त्यक्त-स्वकाला तदा अग्निहोत्रं कृत्वा समाप्यत इति पञ्चमाद्यपादे सिद्धान्त इति वाच्यम्। षोडश्युक्थन्यायविरोधात्, तथा हि ज्योतिष्टोमे तं पराञ्चमुक्थेभ्यो गृह्णाति षोडशिनमित्युक्तानन्तरं षोडशिग्रहयाग-उक्तस्तत्र दैवाद्युत्कर्षे श्रौतक्रमरूपप्रधानाङ्गानुरोधात्। षोडश्युत्कर्षोऽपि कार्यः तदनुरोधाच्च ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्र-मुपाकुर्यादितिविहिततदङ्गस्तोत्रमप्युत्कृष्यते अङ्गानां प्रधानकाल-त्वात्। तथा च समयाध्युषिते सूर्ये षोडशिनं स्तोत्रमुपाकरोतीति विहितस्तोत्रकालो बाध्यते, अङ्गाङ्गत्वेन क्रमापेक्षाया दुर्बलत्वात्, यदाहुः 'क्रमोपि च प्रधानाङ्गभूतत्वाद्बलवानसौ। कालः स्तोत्राङ्ग-

भूतत्वाद् दुर्बलो बाधमर्हती'ति, एतेनाङ्गत्वं सहकारित्वमिति तेन विना फलाभावादन्यतरस्यानङ्गत्वे अवश्यकल्प्ये प्रकृतेष्वावाहना-ङ्गत्वमेव कल्प्यम् लघुत्वात्, न तु तदङ्गावाहने पूर्वदिनानङ्गत्वं गुरुत्वात्, अत एव यत्राश्लेषनिश्चयः पूर्वेद्युः तत्रापि न, अपि चाग्निहोत्रहवण्या हवींषि निर्वपतीति दर्शे विहिताग्निहोत्रहवण्या विकृतौ वह्निसाधनपदमवेष्टौ असंभवाद्बाधेपि न प्रधानीभूतनिर्वाप-बाधः असंभवनातिदेशाप्रवृत्त्या तस्या तत्रानङ्गत्वादिति सिद्धान्तितं गुणलोपे च मुख्यस्येत्यत्र तद्वदत्रापि प्राकृतकालस्य बाधेनाति-देशाद्विशेषकालाभावात् सामान्यप्राप्तप्रधानकाले कथं नावाहनं तद-नुष्ठेयमित्यश्रुतमीमांसानां जल्पनमपास्तम् । किञ्चैवं सर्वशाखान्या-यादेकमूलत्वे मूलान्तरं कल्प्यं स्यात्, अपि चैवं क्वचिदेकाहिष्टा-दावातिदेशिकपात्राद्यङ्गासम्पत्तौ तदनङ्गत्वे कल्प्यमाने एकाहिष्ट्वा-द्यवच्छेदेनैव तथा कल्प्येत, नचान्यदा करणे कालविशेषनियमो न स्यात् मानाभावादिति. पूर्वाङ्गादेः पूर्वादिकाले करणात् तदा कृतस्तात्र तत् । नचाङ्गहानेऽपि फलसिद्धेः प्रयासगौरवम् । अशक्याङ्गहान एव तथात्वादन्यथातिप्रसङ्गात् । अत्रेदं प्रतिभाति—प्राकृतपदार्थविशिष्टो-पकारातिदेशनार्थाद् विकृतौ प्राकृतपदार्थप्राप्तिरिति यादृशस्य प्रकृतौ तद्धेतुत्वं दृष्टं तादृश एव विकृतौ हेतुतयातिदेष्टुं शक्यते, न तु स्वयमन्यथाकरणं मानाभावात्, किन्तु कारणबाधादुपकारस्यैव बाधः, स्तोत्रोपाकरणे तु क्रमकालयोर्द्वयोरप्यौपदेशिकत्वाद्विरोधादे-कस्य बाध्यत्वे यथोक्तं विनिगमकमिति महद्वैषम्यम् । तदिदमालोक-कृतापि कटाक्षितं सा हि विकृतत्वेनेत्यादिग्रन्थेनेति विचार्यमिदं तन्त्रविद्भिरिति । विघ्नज्ञानवानितिमूले विघ्नध्वंसकामनावानिति द्रष्टव्यम्, ज्ञानज्ञानस्याप्रवर्तकत्वात् ।

**नन्वङ्गानां प्रधानविधिविधेयत्वम्, न च ग्रन्थादिसमाप्तौ प्रधानविधिरस्ति, न च तत्कर्तव्यताबोधकस्य लौकिकप्रमाणस्य शास्त्रमेकदेशो युज्यते तस्य तन्निरपेक्षत्वादिति चेन्न—अपूर्वजनकाङ्गानां तथात्वात् आचारानुमितश्रुत्या प्रधानविधिं विनापि तदङ्गत्व-**

प्रधानविधिविधेयत्वं प्रधानविधिसाकाङ्क्षविधिबोधितत्वमङ्गत्वव्यापकं तच्च प्रकृते नास्तीति तद्व्याप्यमङ्गत्वमपि न स्यादित्याशङ्कते । **नन्विति** । **अङ्गानां**—तदीयवैदिकाङ्गानाम् । यथा श्रुतं तु न युक्तं लौकिकाङ्गे व्यभिचारापत्तेः । तदीयवैदिकाङ्गत्वं च प्रधानफलातिरिक्तफलाजनकत्वे सति प्रधानजन्यव्यापारजनकत्वेन वेदबोधितत्वम् । **ग्रन्थादिसमाप्तौ**—ग्रन्थादिसमाप्तिस्थले । **विधिरस्तीति** । तथा च तत्कर्तव्यताबोधकविधिसाकाङ्क्षविधिबोधितत्वस्य तदीयवैदिकाङ्गत्वव्यापकतया व्यापकाभावान्मङ्गले प्रारब्धवैदिककर्माङ्गत्वासंभव इति भावः । ननु तत्कर्तव्यताबोधकप्रमाणसाकाङ्क्षविधिबोधितत्वमेव वैदिकाङ्गत्वव्यापकं लाघवात् तच्च लौकिकानुमानादिप्रमाणादपि संभवत्येवेत्यत आह—**न चेति** । **शास्त्रं**—मङ्गलबोधकवेदः । **एकदेशः**—साकाङ्क्षः । **तस्य**—लौकिकप्रमाणस्य । **तन्निरपेक्षत्वादिति** । आकाङ्क्षायाः शब्दमात्रधर्मतया आकाङ्क्षाया अनिरूपकत्वादित्यर्थः । समाधत्ते **नेति** । अपूर्वजनकतदीयवैदिकाङ्गानामेव प्रधानविधिसाकाङ्क्षविधिविधेयत्वनियमो न तु वैदिकाङ्गमात्रस्येत्युक्तनियमोऽप्रयोजक इति भावः । व्यभिचारमप्याह—**आचारेति** । तथा च तथाविधाचारानुमितश्रुत्या मङ्गले प्रारब्धकर्मजन्यसमाप्तिजनकत्वबोधनेन हेतोः सत्त्वेन साध्यस्य प्रधानविधि-

विधानाच्च। अपि च प्रधानकर्तव्यताबोधक-बोध्यकर्तव्यताकत्वं प्रयोजकं तच्चेहाप्यस्ति। प्रतिबन्ध-काभावस्य सकलकार्यहेतुत्वेन लौकिकप्रमाणस्यापि तत्सापेक्षत्वात्।

ननु यागादिवत् प्रधानदेशकालान्वयस्तदङ्गे मङ्गले स्यादिति चेन्न—असाधारणेऽपूर्वजनके चाङ्ग-तदन्वयात्। अत एव यज्ञशिखाबन्धादौ न प्रधान-देशकालान्वयः। न च दुरिताभावे स्वतः सिद्धे

विधेयत्वस्याभावेन व्यभिचार इति भावः। प्रधानविधिसाकाङ्क्षविधिबोधितत्वं न वैदिकाङ्गत्वव्यापकं गौरवात् किन्तु प्रधानकर्तव्यताबोधकापेक्षणीयबोध्य-कर्तव्यताकत्वमित्याह—अपि चेति। प्रयोजकं—वैदिकाङ्गत्वव्यापकम्। इह—मङ्गले। प्रतिबन्धकाभावस्य—मङ्गलजन्यविघ्नध्वंसादेः। सकलकार्यहेतुत्वेन—सकलप्रारब्धकर्मजन्यसमाप्तिहेतुत्वेन। लौकिकप्रमाणस्यापि—प्रारब्धकर्म-कर्तव्यताबोधकलौकिकप्रमाणस्यापि। तत्सापेक्षत्वात्—मङ्गलकर्तव्यताबोधक-सापेक्षत्वात्।

प्रकारान्तरेण मङ्गले वैदिकाङ्गत्वमाशङ्कते—नन्विति। तद्देशकाल-सहकारेण व्यापारजनकत्वं वैदिकाङ्गत्वव्यापकं न च तन्मङ्गलेऽस्ति देशान्तरे कालान्तरेऽपि शिष्टैर्मङ्गलाचरणादित्यर्थः। परिहरति नेति। शिखा-बन्धने व्यभिचारवारणाय असाधारणेति शिखाबन्धनस्य दक्षिणागम-बोधितयावत्कर्माङ्गतया नासाधारण्यम्। पापक्षयद्वारा यागाङ्ग-

**साङ्गमङ्गलानुष्ठानं निष्फलमिति तद्वेदाप्रामाण्यम्, लोकावगतकारणे हि दुरिते सति वेदेन तस्य तद्ध्वंसजनकत्वं बोध्यते न तु तदुल्लङ्घ्य । अत एव तत्त्वज्ञानवतो भोगार्थं निषिद्धानुष्ठानं दोषाभावान्नाधर्मजनकमिति न तद्वेदाप्रामाण्यम् । प्रमाणान्तरात् स्वतः सिद्धदुरिताभावावगतौ मङ्गलाकरणे नित्यवदनुष्ठानं शिष्टानां भज्येतेति चेन्न—विघ्नज्ञानवतो नित्यवदनुष्ठानादिति सम्प्रदायः ।**

भूते प्राणायामादौ व्यभिचारवारणाय अपूर्वजनकेति । **तद्वेदाप्रामाण्यमिति** । निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदिति वेदस्य विघ्नध्वंसविशिष्टसमाप्तिं प्रति मङ्गलकारणताबोधकस्य विशेषणीभूतविघ्नध्वंसं प्रत्यपि मङ्गलकारणताबोधनेन ध्वंसं प्रति प्रतियोगिनो हेतुत्वेन स्वतःसिद्धविघ्नस्थले तादृशकारणत्वस्यासत्त्वेन तद्वेदस्याप्रामाण्यमिति भावः । वेदत्वं च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकप्रमाणशब्दत्वम् । **तदुल्लङ्घ्येति** । तथा च दुरितध्वंसजनने दुरितस्याप्यङ्गतया साङ्गत्वाभावादेव तत्र विघ्नध्वंसविशिष्टसमाप्त्यभाव इति न तद्वेदाप्रामाण्यमिति भावः । दृष्टान्तेन द्रढयति—**अत एवेति** । निषिद्धानुष्ठानमपीत्युपलक्षणम् विहितानुष्ठानमपि नाधर्मजनकमित्यपि बोध्यम् । **मङ्गलाकरण इति** । निष्फलत्वादिति शेषः । **विघ्नज्ञानवत इति** । तथा च शिष्टानां नित्यवदनुष्ठानमेवासिद्धमिति भावः । **संप्रदायः**—मीमांसकसंप्रदायः ।

प्रगल्भी।

**प्रधानविधीति**। प्रधानकर्त्तव्यताबोधकविध्येकवाक्यतापन्नशब्दबोध्यकर्त्तव्यताकत्वमित्यर्थः। अन्ये तु–प्रधानविधिः प्रयोगविधिः तद्बोध्यकर्त्तव्यताकत्वमित्यर्थमाहुः। ननु प्रधानकर्तव्यताबोधकप्रमाणापेक्षणीयशब्दबोध्यकर्त्तव्यताकत्वमेवाङ्गत्वे तन्त्रं तच्च प्रकृतेऽप्यस्तीत्याशङ्क्याह **नचेति**। शास्त्रं शब्दः। एकदेशापेक्षणीयस्य तस्य लौकिकप्रमाणस्य तन्निरपेक्षत्वात शब्दमनपेक्ष्यैव कर्त्तव्यताबोधनक्षमत्वात्। **आचारेति**। यद्यपि श्रुत्या अङ्गत्वं न बोध्यते अन्यथा अङ्गत्वसाधकानुमानवैयर्थ्यात। उपजीव्यश्रुत्यैव तदङ्गत्वबोधनात तथापि श्रुत्या मङ्गलस्य प्रारिप्सितग्रन्थादिसमाप्तिकारणत्वबोधनं प्रारब्धाङ्गत्वं विनाऽनुपपन्नमिति ज्ञानमुपजीव्यानुमानेनाङ्गत्वबोधनादिति वाच्यम्। **अपि चेति**। प्रधानकर्त्तव्यताबोधकप्रमाणापेक्षितप्रमाणबोध्यकर्त्तव्यताकत्वमित्यर्थः। **लौकिकप्रमाणस्यापीति**। तस्यापि प्रतिबन्धकाभावसहितस्यैव कर्मणः कर्त्तव्यताबोधकत्वादित्यर्थः। तथा च तेनापि विघ्नध्वंसकारणीभूतमङ्गलकर्त्तव्यताबोधकस्य शब्दस्यापेक्षणादिति भावः। **यागादिप्रमाणेति**। यागादावप्यारब्धकर्मणि मङ्गलस्याङ्गत्वे तत्र यागादिरूपप्रधानकर्मदेशकालान्वयः स्यादित्यर्थः। **यागादिवदिति** पाठे यागाद्यङ्गरूपे प्रयाजादौ यथा वैदिके प्रधानदेशकालान्वयः तथा ग्रन्थादिरूपप्रधानारब्धकर्मणां यदि मङ्गलमङ्गं स्यात् तदा तत्र देशकालान्वयः स्यादित्यर्थः। **असाधारण इति**। असाधारणत्वे सति अपूर्वजनकाङ्ग इत्यर्थो न तु प्रत्येकमन्वयः। अन्यथा

प्रगल्भी ।

पारदभावनादौ वह्निशिखत्वादौ च व्यभिचारः स्यादिति भावः । **विशेषविधिं विनेति** । अधिकं विशेषणं बोध्यम् । तेनाश्वमेधादियागाङ्गाश्वरक्षणादौ न व्यभिचारः । ननु सर्वैरेव श्रुतिरूपनमस्काररूपमङ्गलेषु अपूर्वजनकत्वं वाच्यम् । अन्यथा तत्तद्वर्णानामाशुतरविनाशित्वेन कालान्तरभाविविघ्नध्वंसादिजनकतया श्रुतेर्मङ्गलत्वं न स्यात् । नच तत्तद्वर्णानन्तरोच्चार्यमाणचरमवर्ण एव विघ्नध्वंसादिजनक इति वाच्यं तदा श्रुतेर्मङ्गलत्वाभावप्रसङ्गात् । समुदितवर्णानामेव श्रुतित्वात् । किञ्च यत्रोत्तराङ्गं दक्षिणादिकं तत्रागतेश्चेति चेन्न । तत्तद्वर्णानन्तरोच्चार्यमाणवर्णस्यैव मङ्गलत्वात् । समुदिते मङ्गलव्यवहारस्य भाक्तत्वात् । मङ्गलरूपश्रुतौ च न तस्योत्तरभाविदक्षिणादेरङ्गत्वमिति दिक् । **तद्वेदाप्रामाण्यमिति** । वेदबोधितनाशकासमवहितसाङ्गवैदिककर्मणां फलावश्यम्भावनियमात् । प्रकृतेऽनुक्तस्थले तदभावात्तद्बोधकवेदाप्रामाण्यमित्यर्थः । नच साङ्गप्रधानेऽयं नियमो मङ्गलं च न प्रधानम् किन्तु अङ्गमिति वाच्यम् । यस्य कर्मणो विधिना यत्फलं बोधितमस्ति तस्मात्साङ्गाद्वेदबोधितनाशकासमवहितादवश्यं फलमित्यर्थात् । नच साङ्ग दशमूलीकषायानन्तरं क्षरितमृते व्यभिचारः । तस्य स्थायित्वस्यापि तत्राङ्गत्वादिति दिक् । **लोकेति** । ननु तत्र मङ्गले साङ्गे जातेऽपि कथं न फलमिति चेत् गयाश्राद्धादिस्थले पित्रादिगतरागादेरङ्गत्ववत् स्वरूपसतो विघ्नस्याप्यङ्गत्वात् तदभावादिति भाव्यम् ।

आलोकः ।

अङ्गानां—वैदिकाङ्गानाम । प्रधानविधिविधेयत्वम्-प्रधानविधिसापेक्षविधिविधेयत्वम । ननु प्रधानबोधकसापेक्षविधिविधेयत्वे नियमो लाघवान्न तु प्रधानबोधकस्य विधित्वमपीत्यत आह—नचेति । एतदपि नास्तीति भावः । एकदेशः सापेक्षः । ननूक्तला-

आलोकदर्पणः ।

व्यापकाभावेनाङ्गत्वबाधार्थं नन्विति मूलम । तत्र च प्रधानविधिविधेयत्वं लौकिकाङ्गेषु नास्तीत्यत आह वैदिकेति । प्रधानेति मूलमयुक्तं न हि प्रधानविधिरेवाङ्गविधिरित्याशङ्क्य तस्य शास्त्रस्य तन्निरपेक्षत्वादितिमूलानुसारेण व्याचष्टे—प्रधानेति । केचित्तु प्रधानकर्त्तव्यताबोधकविध्यपेक्षणीयविधिबोध्यकर्त्तव्यताकत्वं प्रधानकर्तव्यताबोधकविध्येकवाक्यतापन्नविधिबोध्यकर्त्तव्यताकत्वं वा मूलार्थ इत्याहुः । तत्र प्रथमे एकदेशः अपेक्षणीयम् । तस्य लौकिकप्रमाणस्य कर्त्तव्यताबोधने शास्त्रनिरपेक्षत्वात् । द्वितीये एकदेशः एकवाक्यतापन्नम् । तस्य शास्त्रस्य तन्निराकाङ्क्षत्वादिति योज्यम । अपूर्वेत्यादिना अप्रयोजकत्वम् उपाधिर्वा आचारेत्यादिना च बाधो मूले विवक्षितः ।

आलोककण्टकोद्धारः ।

ननु प्रधानविधिरेव क्वचिदङ्गविधायक इत्यत आह—सापेक्षेति । अपूर्वजनकेति मूलम । इदमत्राकूतम । यद्यपि प्रधानविध्यभावादत्र प्रकरणं न शपनायां प्रमाणं 'प्रधानवाक्यमङ्गानयाकाङ्क्षाप्रकरणं मतम्' इति तल्लक्षणात्, तदुपजीवकत्वाच्च, नस्थानसमाख्ये नाप्येकवाक्यता नापि लिङ्गं सामान्यसम्बन्धबोधकाभावात 'विना सामान्यसम्बन्धं लिङ्गं न विनियोजकम' इति सिद्धान्तात, तथापीतरनिरपेक्षा श्रुतिरेवाङ्गताबोधिका कल्प्येति नाङ्गतायां प्रधानविध्यपेक्षेति । ननूक्तेत्यादिः प्रौढिवादः विधिं विना वैदिका-

आलोकः।

घटेनाग्रेपि विधित्वं त्यज्यतामित्याह—**प्रधानेति। यागादीति।** यागादि यत् प्रधानं विशेषतस्तद्विधिं विनेति पूरणीयम्। अतो देवतावाहनादौ नानेकान्तः। **असाधारण इति।** अत्र बहवः— प्रत्येकनियम पक्ष एव साधुः। विशिष्टे व्यर्थविशेषणत्वात्। न चा

आलोकदर्पणः।

तदङ्गत्वविधानादीति मूलम्। लाघवसहकारेण अङ्गत्वपर्यवसानादिति भावः। समाप्त्यर्थं वाक्यरचनादिव्यापारः कर्त्तव्य इति लौकिकं प्रमाणं प्रतिबन्धके सति कथं समाप्तिः स्यादित्याकाङ्क्षामुत्थापयति ततश्च प्रतिबन्धकाभावसम्पादकोऽपि व्यापारः कर्तव्य इति मङ्गलविषयं प्रमाणं वर्तमानं भवति तत्सापेक्षमित्याह—मूले प्रतिबन्धकेति। मूले लौकिकेति। मङ्गलगोचरोक्तप्रमाणस्येत्यर्थः। व्याख्यानान्तरे तु लौकिकप्रमाणस्य वाक्यरचनादिगोचरस्य प्रवृत्तौ जन्यायां प्रतिबन्धकाभावसम्पादकगोचरप्रमाणसापेक्षत्वादिति व्याख्येयम्। यागादिवदिति पाठे वैदिकप्रधानकर्माङ्गभूते मङ्गले वैदिकप्रधानदेशकालान्वयः स्यादित्यर्थो वाच्यः लौकिककर्माङ्गे उक्तनियमाभावात्। तत्र च प्रधानपदस्य वैदिकत्वविशेषणाध्याहारे गौरवात् यागपद-

आलोककण्टकोद्धारः।

ङ्गत्वासम्भवात् नह्युपकारकत्वमात्रमङ्गत्वं गोदोहनादिसाधर्म्यात्, किन्तु तत्त्वे सति प्रधानोद्देशेन विहितत्वं, अत एव नाविहितमङ्गं भवतीत्याहुः। वस्तुतः— अपिचेत्यादि मूलस्य नाग्रे विधित्वत्यागे तात्पर्यं किन्तु पूर्वव्याप्यानुपाध्यभिधानदूषितायां प्रथमविधित्वत्यागेन व्यापारान्तरमात्र इति ध्येयम्। यागादीति। लौकिके प्रधाने न विधेः कालोक्ति रागप्राप्ये तु नायं नियम इति यागादिपदप्रयोजनमित्याशयः।

आलोकः ।

पूर्वजनकत्वमात्रं शिखाबन्धने व्यभिचारीति वाच्यम् । विशिख इति श्रवणेन सदेति श्रवणेन च शिखाया एवाङ्गत्वप्रतीत्या तस्याश्च परमापूर्वोत्पत्तिकालस्थायितया व्यापारकल्पनायोगात् । न च प्रत्येकं नियमे मङ्गलस्यासाधारणतया तद्देश (प्रधान) कालान्वयापत्तिः । तस्य क्रियामात्राङ्गत्वादिति व्याचक्षते तन्न । अत एवेत्यग्रिमग्रन्थविरोधात् । ततो हि शिखायाः कालानन्वयः प्रतीयते शिखायाश्चाङ्गत्वे तत्र कालान्वयनियमात् । तस्माच्छिखाबन्धनं मन्त्रविशेषविशिष्टा शिखा-अङ्गं तच्चास्थिरतयाऽपूर्वजनकं कालानन्वयि चेति युक्तो विशिष्टनियमः । न चासाधारण इत्येवास्तु शौचादिहेतुमृद्ग्रहणादाव-

आलोकदर्पणः ।

स्याङ्गपरत्वे गौरवाच्च वतिरहितं पाठं विनिश्चित्याह यागादीनीति । मूलकृता असाधारण इत्यादिना प्रधानदेशकालान्वयित्वे प्रयोजकान्तरं दर्शयता वैदिकाङ्गत्वं तत्राप्रयोजकमित्युक्तम् । समभ्यासोपाध्यभिधानमेतदित्यन्ये । व्यापारकल्पनायोगादिति । तथा च हेतोरभावान्न व्यभिचार इति भावः । इदमुपलक्षणम् । साध्यसत्त्वादपि न व्यभिचार इत्यपि द्रष्टव्यम् । ननु गङ्गाजलाचमनेन शुद्धिं जनयताप्या-

आलोककण्टकोद्धारः ।

यागादिवदिति पाठस्तु सुगम इति भावः । अनेकान्तोऽभियामनादौ । ततो हीति । अङ्गत्वेनाभिमतशिखापदार्थस्येत्यर्थः । न च विशिष्टनियमेऽवघातादौ दृष्टार्थे देशाद्यन्वयो न स्यादिति वाच्यम्, व्याप्यं हीदं रूपम् नतु व्यापकं, अवघातादौ पाठिकक्रमादेः प्रमाणान्तरस्यापि सम्भवात्, परमते तस्यापि नियमादृष्टजनकत्वाच्चेति भावः । तस्माच्छिखाबन्धनमिति । न च तथापि संयोगविशेष एव

आलोकः ।

नैकान्त्यात् । न हि तस्य साधारणत्वं वामागमादावनन्वयात् । नाप्यपूर्वजनकत्वं प्रतिबन्धकाधर्मध्वंसरूपत्वाच्छुद्धिपदार्थस्य । अपूर्वजनकत्वं चापूर्वत्वाद्वाराङ्गमिति यावत् । वस्तुनो योगाङ्गभूतासनप्राणायामादौ रोगपातकनाशकेऽङ्गे असाधारणत्वमात्रं व्यभिचारीति विशिष्टे नियमः । सदेति वचनात् सर्वकालीनशिखाधारणं प्रधानं

आलोकदर्पणः ।

नुषङ्गिकमदृष्टं जन्यत एवेति तत्र व्यभिचारादाह—अपूर्वजनकत्वं चेति । नन्वेवं शिखाबन्धने व्यभिचारतादवस्थ्यम् तस्यापि वामागमानन्वयिनोऽसाधारण्यादिति । किञ्चिद्वैदिककर्मानन्वयित्वमसाधारण्यं वाच्यं तच्च मृद्ग्रहणादावपि नास्तीत्यस्वरसादाह—वस्तुन इति । प्रसङ्गादेकदेशिमतमाह सदेति । अत्रान्य इत्यस्वरसोद्भावनम् । तद्बीजन्तु खादिरतादेरिव एकस्यापि पुरुषार्थत्वक्रत्वर्थत्वसम्भवः । फलान्तरसत्त्वासत्त्वे हि न तत्र प्रयोजके किन्तु पुरुषक्रतूपकारकत्वे फलन्तराभावे सतीत्यादौ च यदुक्तं तदेकदेशिमतमाश्रित्येति ध्येयम् ।

आलोककण्टकोद्धारः ।

बन्धनक्रियाव्यापारोऽस्तु किमपूर्वेणेति वाच्यम्, तस्य फलत्वेन स्वावच्छिन्नव्यापाररूपक्रियाऽजन्यत्वाद्विशेषणत्वस्यौत्सर्गिकत्वात् संयोगस्याप्यन्तराविनाशाच्च, अत एव न प्रोक्षणादावपि स व्यापार इति भावः । यद्यप्येवं बन्धनाद्यं जाते धारणानावश्यकतापत्तिः तथापि पुरुषार्थसार्वदिकधारणस्य अङ्गत्वमप्यभिमतं यद् वक्ष्यति, अन्यथा शिखोपवीतधारणापूर्वदाविति । अत एव नोक्तस्मृतिविरोधोपीति तन्निर्वाहार्थं तदिति भावः । अत एव न पूर्वमेकस्यैव प्रधानाङ्गत्वाभिधानविरोधः । प्रतिबन्धकाधर्मेति । न च कल्प्यदुरितध्वं-

आलोकः ।

शिखाबन्धनं कर्माङ्गमिति विभागोऽन्यथा शिखाया एव द्वैरूप्यानुपपत्तेः । फलान्तरसत्वासत्वयोः प्रधानाङ्गभावप्रयोजकयोरेकत्रासंभवादित्यन्ये ।

आलोककण्टकोद्धारः ।

सतोऽपूर्वं लघु निषेधबलादधर्मस्यावश्यकत्वात् अशुद्धिहेतुक्रियया-पूर्वशुद्धिरूपधर्मध्वंसस्य त्वयापि कल्प्यत्वाच्च, प्रायश्चित्तापदेशाच्च, धर्मोत्पत्तौ साधारणाङ्गशौचान्वयापत्तेश्च न त्वशौचध्वंसे तथा असंभवादिति भावः । ननु मृद्ग्रहणस्यापि शौचद्वारा परमापूर्वं साधनतास्त्येव, अन्यथा अङ्गतानापत्तेः किं बहुना यागाद्यङ्गीभूत-मङ्गलस्यापि विघ्नध्वंसद्वारा अपूर्वजनकत्वमतो व्यभिचार इत्यत आह-अपूर्वजनकत्वं चेति । नन्वेवं शिखाबन्धनस्यापि यामागमानन्वयित्वेनासाधारण्यमेवेति व्यभिचार इति तद्भिन्न एवासाधारण्यं प्रकृते वाच्यम् किंच मृद्ग्रहणं नाङ्गं किन्तु संस्कारकर्म प्रधानं शौचजनकमनारभ्याधीतत्वात् प्रायश्चित्तवत्, शौचमेव त्वङ्गं आचमनं त्वङ्गीभूतमपूर्वजनकमेव प्रधानकालान्वयि चेत्यस्वरसादाह-वस्तुत इति । एवं चात एवोपपत्तौ उक्तयुक्त्या शिखैवाङ्गं प्रधानकालान्वयित्वं च तन्मात्रान्वयित्वं तदव्यवहितोत्पत्तिकत्वस्यैवापूर्वजनकत्वं तन्मात्रं चाधिवासनादिव्यभिचारीत्यसाधारणपदं विशेषणविध्यभावार्थकमित्यादि कल्पनमपास्तम् । बन्धनस्याङ्गत्वे उदाहृतस्मृतिविरोधमाह-मदेतीति । तथा च प्रधानपरं तन्नाङ्गपरमिति न विरोध इति भावः । शिखाबन्धनमिति । गायत्र्या च शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रत इति निबध्नीयाच्छिखामन्तत इति च विधिना बन्धनस्याङ्गत्वावगतौ तदुपजीविनिन्दार्थवादे विशिखपदं बन्धनाभावपरं न तु तद्विरोधेनोक्ता-

मैवम् मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः । न च तेन विनापि सिध्यतस्तदङ्गम् । न च जन्मान्तरीयं तत्, जन्मान्तरीयग्रन्थादिकमुद्दिश्य शिष्टैस्तदकारणात् । ननु

आलोककण्टकोद्धारः ।

करग्रन्थस्य बाधनमित्याशयः । अत्र उक्तयुक्त्या एकस्यापि द्वैरूप्यं भवत्येव संयोगभेदात् खादिरो यूपो भवति खादिरं वीर्यकामस्येति विनियोगभेदात् खादिरताया इव । तथा च जैमिनीयसूत्रं "एकस्योभयरूपत्वे संयोगपृथक्त्वादि" तीत्येतावन्मात्रमस्वरसबीजम् । वयन्तु उक्तमन्त्रान्वयार्थं बन्धनमङ्गमतो नाकरविरोधः क्रियायां हि मन्त्रान्वयो न द्रव्ये सर्वसाधारणापूर्वजननाच्च न प्रतिप्रधानमावृत्तिः आचमने तु साधारणाङ्गेऽप्यावृत्तौ शरणमाचार एव । बन्धनापूर्वे जातेपि पुनरुन्मोकस्यापूर्वनाशकत्वात् पुनर्बन्धनकर्मकाले धारणावश्यकतार्थं तु धारणमपि तदेव च सदेति वाक्यार्थः । अन्यथा तस्य प्रधानत्वे तदधारणे पुरुषदोषेपि कर्माविगुणमेव स्यात्, नहि पुरुषार्थविधिनिषेधत्यागे कर्मवैगुण्यं तदाहुः— यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धित इति। सदेति च प्रक्रम्यमानकर्मकालपरमेव, अत एव पूर्वोत्तरार्द्धयोर्हेतुहेतुमद्भावेनान्वयान्न वाक्यभेदः, अत एव च 'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणी'त्युपवीतधारणमङ्गं प्रतीयते, परन्तु सकृदुच्चारणाप्रायश्चित्तीयते हि स इत्यादिः वाक्यान्तरबलाद्धारणं पुरुषार्थं इत्युत्पश्यामः।

इह खलु सकलशिष्टैकवाक्यतया इत्यारभ्य संप्रदायमतं तद्दूषयति मैवमिति । मङ्गलव्यापारीभूतो विघ्नध्वंसः स्वोत्पत्त्यवच्छेदकजातीयतासंबन्धेन फलीभूतसमाप्तिकर्तृशरीरानिष्ठतया समाप्तिकारणम् उत आश्र-

यथा पुत्रेष्टौ कर्मसादुगुण्ये ऐहिकफलाभावे आमुष्मिकं फलं तथा साङ्गेपि मङ्गले यत्र न फलं तत्रामुष्मिकफलमिति चेन्न—तत्र पुत्रमात्रस्य कामनाश्रवणात्। इह तु प्रारिप्सितसमाप्तिकामनया मङ्गलाचार इति तथैव वेदानुमानात्

---

यतासम्बन्धेन फलीभूतसमाप्तिकर्तृनिष्ठतया नाद्यो व्यभिचारादित्याह- मङ्गलमिति। मङ्गलं विनापि—ऐहिकमङ्गलं विनापि। प्रमत्तानुष्ठितसमाप्तेरिति। प्रमत्तनास्तिकशरीरे कर्तृतासंबन्धेन समाप्त्युत्पत्तेरित्यर्थः। ननु जन्मान्तरीयशरीरकृतमङ्गलादेव प्रमत्तादिशरीरे विघ्नध्वंसोत्पत्तिरतो नव्यभिचार इत्यत आह—नचेति। तदङ्गं—तत्कारणम् जन्मान्तरकृतमङ्गलान्नास्तिकशरीरे विघ्नध्वंसोत्पत्तौ विघ्नध्वंसं प्रति मङ्गलं कारणमेव न स्यादव्यवहितपूर्ववर्त्तित्वस्याभावादिति भावः। अन्यमभिप्रेत्य शङ्कते- नचेति प्रकरणादिति। तथा सति जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्य मङ्गले शिष्टप्रवृत्त्यापत्त्या उक्तरीत्या मङ्गलस्य न समाप्तिकारणतेति भावः। ननु यथा जन्मान्तरीयपुत्रमुद्दिश्य क्रियमाणायाः पुत्रेष्टेः ऐहिकफलाभावे जन्मान्तरीयपुत्रोऽपि फलं तथात्रापि स्यादित्याशयेन शङ्कते—नन्विति। परिहरति—नेति जन्मान्तरीयपुत्रमुद्दिश्यापि शिष्टैस्तत्करणादिति शेषः। तथाच दृष्टान्तासिद्धिरिति भावः। प्रारिप्सितसमाप्तिकामनया मङ्गलाचार इति। न तु जन्मान्तरीयग्रन्थसमाप्तिमुद्दिश्येति भावः। तथैव—स्वोत्पत्त्यवच्छेदकतासंबन्धेन समाप्तिकर्तृशरीरनिष्ठतया मङ्गलजन्यविघ्नध्वंसस्य समाप्तिकारणताबोधकत्वेनैव, वेदानुमानात्—वेदस्यानुमेयत्वात्। आसन्नसमयस्य विशेषणत्वमभिप्रेत्य शङ्कते—नन्विति। स्ववृत्तिसमाप्त्युपलक्षकत्वात्—आधेयतया मङ्गलजन्यसमाप्तिपरिचायकत्वात्। तथाच आसन्नसमयस्य विशेषणत्वाभावेन न

**कारीरीवदासन्नसमयारब्धसमाप्तिः फलम् । नन्वासन्नसमयस्तत्सम्बन्धो वा न मङ्गलजन्य इति समाप्तिमात्रं जन्यं तच्चैहिकामुष्मिकसाधारणमिति चेन्न । आसन्नसमयस्य स्ववृत्तिसमाप्त्युपलक्षकत्वात् । अन्यथा कारीर्य्यपि नासन्नसमयफला स्यात् । तस्माद्व्यभिचारान्न तदङ्गमिति ।**

प्रगल्भी ।

**आसन्नसमयारब्धसमाप्तिरिति** । यद्यपि नैतदपि मणिकारमतं तथाप्यभ्युपगमवादेनेदमुक्तम् । वस्तुतस्तु आसन्नसमयारब्धसमाप्तावपि मङ्गलमन्यथासिद्धमिति भाव्यम् । **तस्मान्न व्यभिचारात्तदङ्गमिति** । अत्र वदन्ति । अत्रेदमालोचनीयम् । न तावन्मङ्गलं प्रारिप्सितसमाप्तिमात्रसाधनमित्येतदर्थिका श्रुतिः किन्तु यथा स्वर्गकामो यजेतेत्याकारा यागमूलभूता श्रुतिः । तथा मङ्गलं प्रारिप्सितसमाप्तिसाधनमित्येतदर्थिकैव । नच व्यभिचारान्न कारणत्वबोधनं श्रुत्या यागस्थलेऽपि स्वर्गमात्रे व्यभिचारान्न कारणत्वबोधनं स्यादिति तुल्यम् । तत्र सामान्यरूपविशिष्टे व्यक्तिविशेषे योग्यकारणत्वबोधने सति जातिभेदोऽव्यभिचाराय कल्प्यते इति चेत्तर्हि प्रकृतेऽपि समाप्तित्वविशिष्टयोग्यव्यक्तिविशेषं प्रति कारणत्वबोधने समाप्तौ मङ्गलजन्यविघ्नध्वंसजन्यसमाप्तित्वमुपाधिरूपं कार्यतावच्छेदकं कल्प्यत इति तुल्यम् । नन्वेवं प्रत्यक्षेण कारणत्वग्रहे मङ्गलकार्यत्वान्वयस्तत्रेतियावत् । **तस्मात्**—व्यभिचारात् । नास्तिकसमाप्तौ स्वोत्पत्त्यवच्छेदकजातीयत्वसंबन्धेन मङ्गलजन्यविघ्नध्वंसस्य व्यभिचारात् **न तदङ्गमिति** । विघ्नध्वंसं द्वारीकृत्य मङ्गलं न समाप्तिजनकमित्यर्थः ।

प्रगल्भी।

कथं कार्यतावच्छेदकादिग्रहापेक्षेति चेत् नियतान्वयव्यतिरेकग्रहेण कारणत्वस्य प्रत्यक्षेण ग्रहणे तदपेक्षाया युक्तत्वात्। किञ्च प्रत्यक्षेण सम्बन्धग्रहणे सम्बन्धितावच्छेदकरूपेण सम्बन्धिज्ञानस्य कारणत्वकल्पनात्। अतःप्रत्यक्षेण कार्यकारणभावरूपसम्बन्धग्रहणेऽवश्यं तदपेक्षाभावे तु वाशब्देनापि कार्यकारणभावग्रहेण कार्यतावच्छेदकरूपेण ज्ञानापेक्षा। तथापि न प्रकृते क्षतिः। व्यापारीभूतविघ्नाभावजन्यसमाप्तिस्वरूपस्य निर्विघ्नादिशब्दघटितश्रुतितः प्रतीयमानस्य समाप्तिविशेषकार्यतावच्छेदकत्वात्। तस्य च मङ्गलाजन्यसमाप्तावभावात्। अत एव गङ्गास्नानादिजन्यविघ्नध्वंसजन्यसमाप्तौ न व्यभिचारः। तत्रोक्तरूपाभावात्। किञ्च मणिकारनयेऽपि शब्देन कार्यकारणभावग्रहे न कार्यतावच्छेदकज्ञानापेक्षानियमः। अन्यथा विघ्नध्वंसकामो नमस्कारमाचरेदित्यादिश्रुतितोऽपि विघ्नध्वंसनमस्कारयोः कार्यकारणभावग्रहो न स्यात्। कार्यतानवच्छेदकविघ्नध्वंसत्वेन विघ्नध्वंसस्यापस्थितत्वात्। तत्र माभूद् व्यतिरेकव्यभिचारोऽन्वयव्यभिचारस्तवस्त्येव दोषो वैदिके कर्मणि अन्वयव्यभिचारस्यापि कारणतापरिपन्थित्वात् इति चेत् न शिष्टाचारानुमितश्रुत्या मङ्गलसमसंख्यविघ्नस्थलीयसमाप्तिं प्रति विघ्नसमसंख्यमङ्गलस्य कारणत्वबोधनात्। ननु मङ्गलं समाप्तिविशेषेऽन्यथासिद्धं तज्जनितविघ्नाभावे सति अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कारणचक्रात्समाप्तिरूपकार्यसम्भवे मङ्गलस्य तत्सहभूतत्वात् इति चेन्न प्रमत्तादिसमारब्धसमाप्तिस्थलेऽपि प्राचीनपुण्यसम्पत्तिविशेषसंशयेन प्रकृ-

प्रगल्भी ।

तसमाप्तिस्थले मङ्गलस्य अन्यथासिद्धिसंशयात् योग्यतासंशये सति श्रुत्या कारणत्वस्य प्रमितत्वात्। एवं निर्विघ्नसमाप्तावपि पुण्यसम्पत्तिविशेषस्य प्रयोजकत्वात् विघ्नध्वंसजन्यसमाप्तिं प्रति मङ्गलं नान्यथासिद्धमिति। तच्चिन्त्यते। समाप्तिमात्रे व्यभिचारादेव हि न कारणत्वं समाप्तिविशेषे च अन्यथासिद्धिसत्त्वेनेति मङ्गलस्य न हेतुता तथा हि या पुण्यसम्पत्तिः कारणत्वेनान्यत्र कल्पनीया सा किं साक्षात्कारणमुत परम्परया। नाद्यः अदृष्टस्य समाप्तिस्थले दृष्टकारणोपहारमन्तरेण साक्षात्कारणत्वाभावात् दृष्टसकलकारणसम्पत्तौ सत्याम् अदृष्टविलम्बेन कार्यविलम्बाभावाच्च समाप्त्यादिस्थले अदृष्टस्य कारणोपहारमन्तरेण साक्षात्कारणत्वाभावात् । न च सम्प्रयोगस्थले व्यभिचारः अनन्यगत्या तत्कल्पनात्। यद्वा तत्रापि नाडीशुद्धिद्वारा तस्य कारणत्वात् । नान्त्यः। यत्र विघ्ननिश्चये सति प्रायश्चित्तादिना विघ्नो नाशितः तत्स्थलीयसमाप्तौ कारणीभूतासाधारणादृष्टस्य द्वारीभूतासाधारणसमाप्तिकारणालाभात् । तत्कल्पने गौरवाच्च । दृष्टसाधारणकारणचक्रादेवारब्धसमाप्तेरुपपत्तेः । नहि देवदत्तस्याकृतमङ्गलस्य यो ग्रामगमनादिसमाप्तिः साऽकृतमङ्गलादिपुरुषव्यापारचक्रातिरिक्तकारणमपेक्षते । येनादृष्टजन्यासाधारणकारणापेक्षा स्यात् । अन्वयव्यभिचाराच्च मङ्गलं नारब्धसमाप्तिकारणम् । नच विघ्नस्थलीयसमाप्तिं प्रति विघ्नसमसङ्ख्यमङ्गलत्वं कारणतावच्छेदकम् असर्वज्ञस्य तद्ग्रहणाशक्यत्वेन कार्यकारणभावग्रहाभावप्रसङ्गात् । किञ्च वेदार्थज्ञानव्याकरणादिज्ञानविधुराणां

प्रगल्भी ।

विघ्नवतां मङ्गलकोटिकरणेऽपि लौकिकवाक्यार्थज्ञानादिरूपकारण-व्यतिरेकेणारब्धवेद दिभाष्यासमाप्तिदर्शनात् । नच तत्र विघ्नभूयस्त्वं लौकिककारणव्यतिरेकेण दृष्टकार्यव्यतिरेकसम्भवे विघ्नभूयस्त्वकल्पने मानाभावात् । प्रत्युत गौरवात् । किञ्च स्तवनमस्कारादिसाधारणस्य मङ्गलत्वस्य वक्तुमशक्यत्वेनानुगतकारणत्वाभावात् । नच प्रारिप्सितसमाप्तिप्रतिबन्धकदुरितनिवृत्त्यसाधारणकारणत्वमङ्गलत्वमवच्छेदकं निर्विघ्नसमाप्तित्वाविशिष्टकार्यं प्रति कारणतावच्छेदने आत्माश्रयात् । अवच्छेदकान्तरस्य वक्तुमशक्यत्वात् ।

आलोककण्टकोद्धारः ।

जन्मान्तरीयेतिमूलं । यद्यपि बहुजन्मसाध्ययोगाभ्यासादौ जन्मान्तरफलसाधारण्यपि कामना तदुक्तं निबन्धोद्योते 'जन्मान्तरेऽपि ममेष्टं सेत्स्यतीति कामनयापि नमस्कारकरणादि'ति, तथाप्येतादृशपाकादावपि मङ्गलं विना समाप्तिर्दृश्यत एव, न हि तत्राप्युदर्याग्निना दह्यमानस्य क्षणमात्रविलम्बेऽप्यसहिष्णोर्जन्मान्तरं कामनागाहत इति संभाव्यते सचेतोभिः । न च तत्रेष्टप्रतिसंधानादविलम्बस्येच्छाविषयत्वेपि तावद्दूरं नाधिकाग्विशेषणं पुत्रेष्टौ पुत्रविशेषणपाण्डित्यादिवत्, लाघवेन समाप्तिकाम इत्येव श्रुत्युन्नयनात्, किं च सामान्यफलश्रवणेऽपि विशेषेच्छया प्रवृत्तिर्दृश्यते वैरिसामान्यवधफलकेऽप्यभिचारे तद्तद्वैरिवधकामनयैवेति वाच्यम् । प्रत्यक्षश्रुतौ न्यायात्तथा तात्पर्यावधारणेन तथासंभवेप्याचारमात्रमूलके कामनोल्लङ्घनेनाधिकारकल्पनस्य श्रुत्यनुमानस्य चासंभवादन्यथा स्वतः सिद्धविघ्नाभावस्थलीयसमाप्तिवारणार्थं विघ्नध्वंसविशिष्टसमाप्तेर्वाच्यत्वे लाघवाद्विशेषणमात्रबोधकश्रुत्यनुमानापत्तेरिति जितमस्माभिः एवं स्मृतावपि विशिष्टफलके लाघवेनैकदेशबोधकागमानुमानापत्ते

आलोकः ।

तस्माद्व्यभिचारान्न तदङ्गमिति । ननु न व्यभिचारः समाप्तिमात्रे तथात्वेपि विघ्नस्थलीयसमाप्त्यवच्छेदेन व्यभिचाराभावात्। सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वादिति ग्रन्थपर्य्यालोचनया तथा विशेषलाभात्। नच समाप्त्या जन्मान्तरीयतदनुमानमिति ग्रन्थविरोधः विघ्नध्वंसपूर्वकत्वविशेषणनिश्चयस्यापि क्वचिद्भावात् । न चेदं समाप्यतामिति कामनया सदाचारानुमिता श्रुतिः समाप्तिकामो मङ्गलमाचरेदित्याकारिकैवेति ततः समाप्तित्वमवच्छेदकं प्रतीतं न त्वन्यदितिवाच्यम्। निर्विघ्नं समाप्यतामिति कामनया तदाचारान्निर्विघ्नसमाप्तिकाम इत्याद्याकारिकाया एव श्रुतेरुन्नयनात् । अस्तु वा समाप्तिकाम इत्याकारश्रुत्यनुमानं नचैतावता समाप्तित्वावच्छेदकत्वलाभः तत्र शब्दासामर्थ्यात् । स्वर्गत्वाश्वमेधजन्यत्वसामानाधिकरण्यमेव हि शब्देनान्यत्र प्रतीयते तु न स्वर्गत्वस्यावच्छेदकत्वमपि सामर्थ्यादसंभवाच्च। स्वर्गत्वस्य तदजन्यवृत्ति-

आलोकदर्पणः ।

उपलक्षकत्वादिति मूले—कार्यतावच्छेदकप्रविष्टत्वादित्यर्थः। समाप्त्येति । समाप्तिसामान्यस्य मङ्गलाजन्यत्वे तदनुमापकत्वासम्भवादिति भावः। सामान्यशब्दस्य विशेषपरत्वमभिप्रेत्य तदज्ञानं परिहरति विघ्नेति । असामर्थ्यात्- अपदार्थत्वादवाक्यार्थत्वाच्चेत्यर्थः। असम्भवं व्युत्पादयति-स्वर्गत्वस्य तदजन्येति। नियतान्वयव्यतिरेकयोर्ग्राहकत्व-

आलोककण्टकोद्धारः ।

रिति बहुविप्लव इति । यद्यप्येवं नागृहीतविशेषणन्यायेन कामनाविषयसमाप्त्यंशत्यागोप्यनुचितः तथा च किञ्चिदंशत्यागावश्यकत्वे ऐहिकत्वमेव त्याज्यं न च समाप्तिरुभयत्यागापत्तेः। अस्तु वा ऐहिक-

आलोकः ।

त्वादतिप्रसक्तत्वात्तद्वादिहापि सामानाधिकरण्यमात्रं प्रतीत्य तत्रावान्तरजात्यवच्छेदकत्ववत् निर्विघ्नसमाप्तित्वमवच्छेदकं कल्प्यतामिति को दोषः। न च स्वर्गपदं विशेषपरम्, इहापि समाप्तिपदे तथात्वस्य सुवचत्वात् । वस्तुतस्तु तस्य विशेषपरत्वेपि हेतुताग्रहे न तदुपयोगः तद्ग्रहेण तत्परत्वनिश्चयात्। अगृहीतायां तु तस्यां जातिभेद एव न मानं न कुतस्तत्परत्वे। ननु कार्यतावच्छेदकेऽगृहीतेऽपि अतिप्रसक्तधर्मसामानाधिकरण्येनापि कारणताग्रहो यदि शब्दादौ कुत एतन्न प्रत्यक्षेपीति चेत् न ग्राहकाभावात् । अन्वयव्यतिरेकौ हि तत्र तद्ग्राहकौ न चातिप्रसक्तेन द्रव्यत्वादिना दण्डान्वयव्यतिरेकग्रहो यत्र दण्डाभावस्तत्र द्रव्याभावाभावात् यत्र द्रव्यं तत्र दण्ड इति नियमाभावाच्च । अत एव यत्र ग्राहकं तत्रातिप्रसक्तधर्मसामानाधिकरण्येन तृणजन्यत्वमपि वह्नौ सुग्रहं समानप्रकारकं हि विरहज्ञानं समानप्रकारकज्ञानविरोधि । तथा च स्वर्गत्ववह्नित्वावच्छेदेन व्यभिचारग्रहात् तदवच्छेदेन नियतपूर्ववर्तित्वं माग्राहि तदाश्रये धर्म्मिणि तु हेतुताग्रहे किं बाधकमिति। अत्राहुः ।

आलोककण्टकोद्धारः ।

निर्विघ्नसमाप्तिविशिष्टैव कामनानुरोधात् फलम्। प्रमत्तानुष्ठिते तु विघ्नाभावादेव न व्यभिचारः तथापि वक्ष्यमाणान्यथासिद्धावेव तात्पर्यम्। तद्वादिहापीति। विघ्नध्वंसेऽपि ध्वंसे तत्त्वस्य मङ्गलजन्यतानवच्छेदकत्वात्, नमस्कारत्वादिनैव विध्यनुमानाच्च त्वयाप्येतदेववाच्यमित्याशयः। यत्र द्रव्यमिति । यद्यपि नियमो न ग्राहकः किंतु सहचारमात्रं तच्चात्राप्यस्तं व्यभिचारज्ञानं चावच्छेदकताग्रहे विरो-

आलोकः ।

विघ्नाभावस्य द्वारत्वे कामनायां तदनुल्लेखापत्तेः । अन्यथासिद्धत्वात् स्वर्गकामनायामपूर्ववत् । न च विघ्नाभावजन्यसमाप्तावेव

आलोकदर्पणः ।

मभिप्रेत्याह—ग्राहकाभावादिति । मा ग्राहि—मा गृह्यताम् । किं बाधकमिति । चिन्तामणिकारमतेऽपि विघ्नध्वंसकामो देवतानतिमाचरेदित्यादिविधौ प्रथमं सामानाधिकरण्यमात्रबोधके विघ्नविशेषध्वंसत्वात्मककार्यतावच्छेदककल्पनमौत्तरकालिकमेवेति भावः । अन्यथासिद्धत्वादिति । साक्षात्परम्परोदासीनं तावत्कारणत्वमात्रं तच्च स्वस्वव्यापारान्यतराऽव्यवहितपूर्वत्वगर्भितं तथा च तदुल्लेखेनैव विशिष्य विघ्नध्वंसानुल्लेखेऽपि कारणत्वोल्लेखपर्याप्तेरित्यर्थः । द्वितीयं दूषयति नचेति । ननु निर्विघ्नसमाप्तिकाम इति श्रुतिपक्षे निर्विघ्नत्वस्य श्रौतत्वादेव कामनावच्छेदकत्वं समाप्तिकाम इति श्रुतिपक्षेऽपि अधिकारिविशेषणीभूतकामनायामेव श्रौतधर्मावच्छिन्नत्वनियमो न तु सर्वस्यामत एवादृष्टेऽपीष्टसाधनताज्ञाने कामना भवत्येव तथा च निर्विघ्नसमाप्तिकामनाया अधिकारिविशेषणत्वाभावे-

आलोककण्टकोद्धारः

धि ननु सामानाधिकरण्यग्रहे तथाप्यनन्यथासिद्धिग्राहकाभावान्न तद्ग्रहः तृणादौ तु नियतान्वयव्यतिरेकावेव तथा शब्दे च शब्द एवेति विशेष इति भावः । ननु समाप्यतामिति कामनापक्षे नायं दोष इष्टत्वात् नापि निर्विघ्नं समाप्यतामिति कामनापक्षे तथा सति तादृशश्रुत्युन्नयनेन तस्य श्रौतत्वादेव कामनाविषयत्वात् । किं च फलफलस्यापि कामनाविषयत्वादर्शनात् विघ्नध्वंसस्य फलत्वे तत्फलसमाप्तेः कामनाविषयता न स्यादिति समानो दोषः । यत्तु विशिष्टकामनापक्षेपि लाघवात् समाप्तिकाम इति श्रुत्युन्नयनान्नाधिकारिविशेषणकामनाविषयत्वं ध्वंसस्येतीष्टापत्तिरन्यादृशकामनाविषयत्वं च

आलोकः ।

मङ्गलजन्यत्वात् फलतावच्छेदकतया उल्लेखो न द्वारतयेति वाच्यम् । श्रौतधर्मावच्छेदेनैव हि वैदिके कामनानियमात् । अन्यथा स्वर्गत्वस्य फलत्वानवच्छेदकतया स्वर्गत्वेपि कामनोल्लेखानुपपत्तेः । वस्तुतो विघ्नाभावः कार्यतावच्छेदक एव न जनकत्वात् तयोर्विरोधात् । न च विघ्नपूर्वकतामात्रमवच्छेदकमतिप्रसङ्गात् । नापि मङ्गलसमानकालविघ्नध्वंसजन्यसमाप्तित्ववत् स्वसमानकालीनमङ्गलपूर्वकत्वमात्रमवच्छेदकं प्रतिबन्धकस्य च कार्यविशेषनियतत्वेन विघ्नसमानकालीनसमाप्तिद्वयेऽन्यतरप्रतिबन्धकविघ्ननिवर्तकमङ्गलस्यापरा-

आलोकदर्पणः ।

ऽपि तत्स्वरूपे बाधकाभाव इत्यस्वरसादाह वस्तुत इति । तयोः—जनकत्वकार्यतावच्छेदकत्वयोः। अत्राप्रयोजकत्वमित्यस्वरसादाह— न चेति। समाप्तिनिष्ठं मङ्गलजन्यतावच्छेदक नास्तीत्यतिप्रसङ्गतादवस्थ्यादित्यन्तस्य तात्पर्यम् । नापि मङ्गलेति । मङ्गलसमानकालीनो यो विघ्नस्तद्ध्वंसपूर्वकसमाप्तित्वं यथा नावच्छेदकं तथा विघ्नसमानकालीनं यन्मङ्गलं तत्पूर्वकसमाप्तित्वमपि नावच्छेदकमित्यर्थः। प्रतिबन्धकस्येति। स्वतःसिद्धविघ्नाभावपूर्विका एका मङ्गलजन्यविघ्ननिवृत्तिपूर्विका चापरा समाप्तिः तुल्यकालमेव यत्र भवति तत्राद्यायामुक्तधर्मद्वयमति

आलोककण्टकोद्धारः ।

सामग्रीसत्त्वेनापूर्वेपि दुष्परिहरमिति तत्र कार्य्यानुमेयानां यथा कार्यमुन्नयने लाघवाद्यनादरादित्यस्वरसादाह, वस्तुत इति । तयोर्विरोधादिति । व्यापारविधया कारणत्वव्यापारिकार्यतावच्छेदकत्वयोः काशीमरणादिप्रतिबन्दिभयेन विरोधादित्यर्थः अतस्तेजोरूपवदुभयात्मकत्वाविरोध इत्यपास्तम् । अतिप्रसङ्गः—गंगास्नानजन्यध्वंसपूर्वक समाप्तौ । नापीति । अत्र सादृश्येऽपि वतिः । तच्च यथा विघ्नध्वंसस्या-

आलोकः ।

जनकत्वेनातिप्रसङ्गतावस्थ्यात् अन्यथा काशीमरणादीना तत्त्वज्ञानविशेषजन्यमोक्षहेतुत्वसंभवे यथाश्रुतश्रुतिसमर्थने तत्त्वज्ञान एवोपक्षयं कल्पयित्वा हेतुमात्रबोधिका श्रुतिः प्रयोजकपरतया न समर्थ्येत न च तत्त्वज्ञानविशेषो नोपस्थित इति वाच्यम् । तर्हि तत्रापि काशीमरणाद्यहेतुतापत्तेः उत्तरकालं कल्पना यदि तदा

आलोकदर्पणः ।

प्रसक्तमित्यर्थः । ननु मङ्गलजन्यविघ्नध्वंसविशेषजन्यसमाप्तित्वमवच्छेदकमस्त्वित्यत आह—अन्यथेति । अन्यं प्रति जनकं प्रतीत्यन्यथासिद्धया तत्त्वज्ञानविशेषेण काशी मरणं मोक्षं प्रति यथान्यथासिद्धं तथा मङ्गलमपि समाप्तौ विघ्नध्वंसविशेषेणान्यथासिद्धमिति इदमपितुल्यमित्यर्थः । वस्तुत इति । काशीमरणे कारणताबोधकयापाततोऽप्यस्ति प्रकृते तदपि न आचारस्य प्रयोजकत्वमात्रबोधकश्रुत्याक्षेपकत्वादिति प्रघट्टकार्थः । क्लृप्तत्वाल्लाघवाच्चेति तथाचावश्यक्लृप्तेन्याद्यन्यथासिद्धयापि न मङ्गलं हेतुरिति भावः। पूर्वं काशीमरणदृष्टान्तेन मङ्गलस्यान्यथासिद्धिरुक्ता तामेव मण्यवयवविभागादिदृष्टान्तेन दृढीकरोत्यन्यथेति। विभागग्रहणञ्च एकदेशिनाऽवयवविभागस्य द्रव्यनाशकत्वस्वीकारात् । अत्र वदन्ति । अन्यं प्रतीत्याद्यन्यथासिद्धिद्वयमत्रासम्भावि-

आलोककण्टकोद्धारः ।

प्यवच्छेदकत्वे न केवलस्य तथात्वमुक्तातिप्रसङ्गात् किन्तु विशेषणान्तरविशिष्टस्य तथा विघ्नस्यापीत्येवंरूपम्, अत्र उभयत्र मङ्गलपदं तद्विघ्ननाशसमर्थमङ्गलपरं, तेन यत्र बलवान् विघ्नो लघुना मङ्गलेन कृतेनापि न नाशितो ऽत्रेव गङ्गास्नानादिना नाशितस्तत्तदुत्तरसमाप्तौ न व्यभिचारः, अत्र उभयत्र मङ्गले विघ्नसमसंख्यत्वमपि

आलोकः ।

समानम् । ननु तत्त्वज्ञानविशेषजन्यत्वं मोक्षमात्रे दुर्ग्रहं मोक्षविशेषे च स्फुरिते तदवच्छेदेनैव हेतुता किमन्तर्गडुना तत्त्वज्ञानेनेत्युभयथा व्यापारो नावच्छेदक इति चेत्तुल्यम् । ननु काशीमरणज्ञानविशेषयोर्हेतुहेतुमद्भावग्रह एव तदवच्छेदकत्वशङ्का अन्यथा ज्ञानविशेषजन्यत्वस्यातिप्रसक्त्या तद्दोषतादवस्थ्यात् तथा च तद्ग्राहाशक्यत्वे क्व तदवच्छेदकत्वं शक्यत्वे वा अन्यं प्रति

आलोकदर्पणः ।

तमेव अवच्छेदकनैरपेक्ष्येण श्रुत्या कारणत्वबोधने गृहीत एवेति नियमघटिततल्लक्षणायोगात् । यत्तु स्वतः सिद्धविघ्नविरहस्थले अवश्यकल्पनीयेन विघ्नाभावेन मङ्गलमन्यथासिद्धमिति तदपि न श्रुत्या मङ्गलकारणतां बोधयन्त्या अनन्यथासिद्धत्वमपि बोधितमिति तद्रक्षायै स्वतःसिद्धविघ्नविरहस्थलीयसमाप्तौ सुकृतसम्पत्तेरेव हेतुत्वात् इह च विघ्नस्थलीयसमाप्तौ तस्या असत्त्वेनावश्यकल्प्यकारणेनोपपत्त्यभावादिति । यच्च काशीमरणकारिरीमण्यवयवविभागवन्मङ्गलमन्यथासिद्धं तन्न काशीमरणकारीर्य्योः मोक्षविशेषे वृष्टिविशेषे च हेतुत्वस्यैवाभ्युपगमात् । अत एव कारिरीजनितवृष्टौ जातिभेद एवेति मूलम् ।

आलोककण्टकोद्धारः ।

निवेशयन्ति तत्तु नातीव समर्थं तदानीं प्रतिबन्धकान्तरबलात् समाप्त्यभावेपि प्रकारान्तरेण तद्ध्वंसे अल्पसंख्यमङ्गलेनापि तत्समाप्तिजनने बाधकाभावात् समर्थस्य लब्धव्यापारत्वात्, साङ्गादिति नियमस्य लौकिककारणाभावेन कार्य्याभावे तद्विशेषणेनाप्यरक्षणादिति ध्येयम् । ननु मङ्गलजन्यविघ्नध्वंसजन्यसमाप्तित्वं स्वप्रतिबन्धकविघ्नसमानकालतद्विघ्ननाशकमङ्गलपूर्वकत्वं वा व्यापारी-

आलोकः ।

पूर्ववर्तिग्रहाज्जनकं प्रति पूर्ववर्तित्वग्रहाद्वा अन्यथासिद्धतया हेतुतायामेव बाधादिति चेत्, इदमपि तुल्यम् । वस्तुतः काशीमरणादिहेतुताबो-

आलोकदर्पणः ।

यच्च काशीमरणादेः कारणत्वं क्वचिद्दृष्यते तत्र तत्त्वज्ञानं विना स्वातन्त्र्येण हेतुत्वं नास्तीत्यभिप्रायः । मण्यवयवविभागस्य चाकारणत्वं प्रमाणाभावात् इह च श्रुतेरेव प्रमाणत्वात् । यदपि आचारस्य प्रयोजकत्वमात्रबोधकश्रुत्याक्षेपकत्वमिति तदपि न एवं सति प्रत्यक्षविधेरपि आचारजनकज्ञानविषये शक्ततया अश्वमेधादे-रपि कारणत्वाभावप्रसङ्गात् । न च प्रयोजकत्वमात्रे श्रुत्या बोधि-तेऽपि अन्यथासिद्ध्यनुपलम्भादश्वमेधादेरपि कारणता पर्यवस्यतीति वाच्यम् मङ्गलेऽप्यन्यथासिद्धिविरहस्य दर्शितत्वादिति । अत्र ब्रूमः अवश्यकल्प्येत्याद्यन्यथासिद्धिसत्त्वान्न मङ्गलं कारणम् विघ्नसंसर्गा-भावकारणताया आवश्यकत्वात् । न च मङ्गलाप्रयुक्तविघ्नविरहस्थ-लीयसमाप्तौ सुकृतसम्पत्तेर्हेतुत्वमङ्गीकृत्य तदुद्धारः कृत एवेति वाच्यम् । न हि समाप्त्यादिरूपे कार्ये सुकृतस्य साक्षाज्जनकत्वं वन्ध्यासम्प्रयोगादाविव दृष्टसम्पत्तावदृष्टविलम्बेन विलम्बाभावात् किन्तु मङ्गलस्येव विघ्नध्वंसविशेषद्वारा तथा च विघ्नात्यन्ताभावस्थले अवश्यक्लृप्ताद्विघ्नसंसर्गाभावात् द्वयोरप्यन्यथासिद्धिः । किञ्चैक-स्मिन्विशेषे कारणविशेषस्वीकारे तदितरविशेषकारणान्तरमावश्यक-मिति प्रमागुणजन्यत्वव्यवस्थापनावसरे मूलकृदेव वक्ष्यति । तथा च विघ्नात्यन्ताभावस्थलेऽपि कारणविशेषो वक्तव्यः स च दुर्वचः

आलोककण्टकोद्धारः ।

भूतविघ्नध्वंसजन्यसमाप्तित्वं वा अवच्छेदकमस्तु त्वदुक्तविरोधे माना-भावात् । वस्तुतो जन्यतावच्छेदकाननुगमस्यादोषतया विघ्नध्वंस

आलोकः ।

धकश्रुत्यादेः प्रत्यक्षतया तत्र हेतुताशङ्कापि प्रकृते तु हेतुताबोधकमेव दुर्लभं सुतरां तदधीनमवच्छेदककल्पनम् । तथा हि न तावत्तद्बोधिका प्रत्यक्षा श्रुतिरस्ति किंत्वाचारेण परिकल्प्या । नचाचारो हेतुताग्र-

आलोकदर्पणः ।

कारीय्यांश्च कारणत्वोक्तिरेकदेशिमतेन । यच्चोक्तं प्रयोजकत्वमात्रे विधेरर्थे अश्वमेधादिकारणता कथमिति तन्न अवश्यमेत्याद्यन्यथा-सिद्धेरत्रैव तत्राभावेन कारणतायामेव विधेः पर्यवसानात् । अश्व-मेधेनेति कारणत्ववाचितृतीयायाः प्रत्यक्षत्वाच्च । वस्तुतो भवतु कारणत्वं विधेरर्थस्तथापि विघ्नध्वंसकाम इत्येव श्रुतेरुन्नयनं लाघ-वात् । न च कामनाविषयत्वेनोपस्थितसमाप्तेर्न विधौ त्याग इति वाच्यम् तथा सति समाप्तेः स्वतःपुरुषार्थतया सुखादेरपि कामना-विषयतया तत्फलकताबोधकोऽपि विधिः कल्प्येत तत्र चेद्गौरवमि-हापि तत्समानम् । तस्मादप्रत्यक्षे विधौ लाघवादिसहकारेण विधिं कल्पयित्वा फलावधारणम् । प्रत्यक्षे तु यथाश्रुतविधिमादायेति । यच्च विघ्नान्यूनसङ्ख्यत्वमवच्छेदकमादायान्वयव्यभिचारवारणं तन्न बलवत्तरैकविघ्नस्य बहुभिरपि मङ्गलैरनिराकरणादिति दिक् ।

आलोककण्टकोद्धारः ।

इव तत्तत्समाप्तित्वं नानैवावच्छेदकमस्तु न हि ध्वंसे अनुगतं कार्यतावच्छेदकं तवापि संभवतीत्यस्वरसादन्यथासिद्धत्वं मूल-युक्तिं प्रतिबन्दिमुखेनाह– अन्यथेति । नचेष्टापत्तिरत एव तत्वज्ञान-द्वारापि काशीमरणादेर्मोक्षहेतुत्वसंभवादिति द्रव्यप्रकाशे तथैव व्यक्त-मिति वाच्यं तस्य प्रयोजकार्थत्वात् चिन्तामणिविरोधादिति भावः । इदमपीति । यद्यप्यवच्छेदकग्रहपूर्वकतानियमपक्ष एतत्संभवेपि प्रकृते

आलोककण्टकोद्धारः ।

न तत्संभवः गृहीत इति निष्ठार्थाभावात्, तथाप्यन्यथासिद्ध्युपलक्षणमिदम्। सा चान्यत्रेत्येवंरूपा प्रकृते संसर्गाभावत्वेनाभावत्रयस्य हेतुत्वकल्पनादत्यन्ताभावादिस्थलीयसामग्र्यैवोपपत्तौ न सामान्यकारणमध्ये स्वजन्यविशेषजन्यत्वावच्छेदेन विशेषसामग्रीत्वं कल्प्यते, अन्यथासिद्धेः काशीमरणमरण्यवयवविभागकारीरीदण्डविशेषसामग्रीवत्, नीलघटत्ववदार्थसमाजसिद्धत्वाच्च। न च विघ्नाभावस्य न समाप्तित्वावच्छिन्ने संसर्गाभावत्वेन हेतुता मानाभावात् किन्त्वाचारानुमितश्रुतिबलात् समाप्तिविशेषे तद्ध्वंसत्वेनैवेति नेयमन्यथासिद्धिरिति वाच्यम् विशेषान्तरे विशेषसामग्र्यभावे विघ्नसत्वे मङ्गलं विनापि सामान्यसामग्र्या तादृशसमाप्त्यापत्तेः। न च विशेषान्तरे प्राक्तनपुण्यसम्पत्तिर्हेतुःलाघवात् संसर्गाभावत्वेन सामान्यसामग्र्यैवोपपत्तौ तादृशसुकृते तद्विशेषहेतुत्वे च मानाभावात् अन्यथान्यत्रापि ध्वंस एव कार्यविशेषहेतुः स्यान्न तु सामान्ये संसर्गाभावः किंच पापरूपविघ्नस्य साक्षादप्रतिबन्धकतया न तद्ध्वंसः समाप्तौ हेतुरिति तद्द्वारमिति प्रकरणार्थनिर्गर्वः । ननु विघ्नध्वंसद्वारत्वे तत्फलकत्वे वा स्वतःसिद्धविघ्नाभावस्थलीयमङ्गलस्याफलत्वेन साङ्गादिति विरुद्धं विघ्नस्यानङ्गत्वात्। नाविहितमङ्गं भवतीति न्यायादित्यनयोर्द्वयोरपि पक्षयोरयुक्तत्वादपूर्वद्वारकतापक्ष एव साधुरिति वाच्यम् अङ्गपदेन सहकार्यभिधानात्, निर्दोषकृतकर्माद्यनुरोधात् अपूर्वपक्षे विघ्नज्ञानानपेक्षापत्तेः साङ्गत्वावधारणे अनावृत्तेश्च दुर्निवारत्वात्। न च पुत्रेष्टिन्यायः तत्र दुरितज्ञानानपेक्षणात् साङ्गतानिश्चये अनावृत्तेश्च मङ्गलानन्तरोत्पन्नविघ्नस्याप्यपूर्वेण नाशे समाप्त्यवश्यभावापत्तेः। न च कर्मणोऽनियतविपाकसमयत्वान्न तेन तन्नाशः समाप्तिपूर्वं तद्विपाकानावश्यकत्वे फलानिश्चयाद्वैदिके अप्रवृत्त्यापत्तेः, कृतमङ्गलेन ग्रन्थसमाप्तिसामर्थ्यापादने मङ्गलावश्यकतापत्तेश्च। नन्वत्र श्रुत्या ऽन-

आलोकः ।

हाधीनो येन तद्बोधकं वेदमाक्षिपेत ।किंतु कारणकारणेपि प्रवृत्तिदर्शनेन फलान्वयव्यतिरेकशालित्वज्ञानस्य तद्धेतुतया तेन विनानुपपद्यमानस्तज्ज्ञानजनकः स चोभयथा संभवन्न कार्यतावच्छेदकं कल्पयति । किं तु क्लृप्तत्वाल्लाघवाच्च समाप्तौ विघ्नाभावं तन्मात्रे मङ्गलमित्यलं विस्तरेण। अन्यथा मणिध्वंसजन्यदाहादौ मण्यवयवविभागस्यापि हेतुतापत्तेः। अत

आलोककण्टकोद्धारः ।

न्यथासिद्धत्वबोधनादस्त्ववान्तरावच्छेदककल्पना, न चान्यथासिद्धिनिश्चये कथं श्रुत्या तद्बोधनमन्यथासिद्धेस्तन्निर्वचनस्य च कारणताग्राहकाभावतन्निश्चयमूलकत्वेन प्रकृते तद्ग्राहकसत्त्वेन तद्व्यावर्तक विशेषणान्तरप्रक्षेपस्यौचित्यात्, नत्ववयवविभागादावनन्यथासिद्धिबोधकाभावादित्याशङ्क्य प्रकृतेपि तदभावमाह—वस्तुत इति। नचाचार इति । प्रकृतः समाप्तीतिशेषः। तेनायमर्थः मङ्गलप्रवर्तिष्णोरस्ति समाप्ति कामनावद्विघ्नध्वंसकामनापि, अन्यथा निश्चिततद्व्यतिरेकस्यापि तत्र प्रवृत्त्यापत्तेः, तत्र समाप्तिकामनया विघ्नध्वंसकामना तया तत् साधनतया निश्चिते मङ्गले प्रवृत्तिरित्येवमेवोपपत्तौ केन प्रमाणेन समाप्तिकामनाया अधिकारिविशेषणत्वं निश्चीयेत येन तद्विशेषसाधनताबोधिका श्रुतिरनुमीयेत । यदि तु समाप्तिकाम इति प्रत्यक्षा श्रुतिः स्यात् तदा तदनुरोधेन सर्वं कल्प्येतेति प्रत्यक्षत्वाभावोपवर्णनमफलं, तस्मान्नानुमिता श्रुतिः क्वचिदर्थे प्रमापिका सामग्रीविरहात्, किन्तु मानान्तरसिद्धे कारणत्वे संवादरूपतया अन्धपरम्पराशङ्कानिरासिका । न चान्यथासिद्धिदार्ढ्ये तदस्तीतिबाधितत्वात् श्रुतेरेवं विधविषये प्रमाणत्वं शङ्कास्पदमपि नेति तात्पर्यकाष्ठा, एवं चानन्यथासिद्धिज्ञानस्याप्रवर्तकत्वं प्रकृतग्रन्थार्थं बुद्ध्वा तत्र प्रलापा निरस्ताः । तथा हि प्रयोजकताज्ञानमात्रस्य प्रवर्तकत्वे तावन्मात्रस्य विध्यर्थत्वेऽप्रत्यक्षतोपवर्णनमप्रकृतमित्यस्तु परं तु तावन्मात्रस्य प्रवर्तकतया विध्यर्थत्वे

आलोकः ।

एव कारीरीतः प्रत्यवग्रहनिवृत्तिमात्रं वृष्टिस्तु स्वहेतोरेवेति सिद्धान्तः। अन्यथा तत्राप्युक्तरीत्यापत्तेः प्रतिबन्धकध्वंसस्य कार्यपूर्ववर्त्तिताग्रहानन्तरं तज्जनककारीरीमङ्गलयोः पूर्ववर्तित्वग्रहेण कुलालपितृवदन्यथासिद्धतया हेतुत्वाग्रहादिति साधूक्तं व्यभिचारान्न तदङ्गमिति ।

आलोककण्टकोद्धारः ।

यागादावपूर्वव्यापारता नो कल्प्येत विध्यर्थस्य जनकजनकत्वेनाप्युपपत्तेः । अथ तावन्मात्रे विधिना बोधिते यत्र यागादौ प्रमाणान्तरेणान्यथासिद्धिपञ्चकाभावावधारणं तत्र कारणत्वे पर्याप्तिर्नत्वेवं मङ्गलस्य समाप्ताविति चेत्-मैवं वेदेनानन्यथासिद्ध्यवबोधने तद्व्यावृत्तान्यथासिद्धेरेवाशक्यनिर्वचनत्वात् लक्ष्यनिश्चयेनैव लक्षणप्रवृत्तेः, अन्यथा तत्राव्याप्त्यतिव्याप्त्याद्यनुद्भावनापत्तेः । न च यागादौ वेदादन्यत्तद्बोधकम् । अथ प्रामाणिकतद्व्यवहाराल्लक्ष्यालक्ष्यविभागः तर्हि मङ्गले अनन्यथासिद्धत्वव्यवहारो नास्ति यागादौ त्वस्तीति ते हृदयं, तच्च नैवं प्राचां तथैव व्यवहारात्, किंच वेदस्य तद्बोधकत्वे यागादौ तद्व्यवहारो न स्यात् । मानाभावात्, नहि व्यवहारपरंपरैव तत्र मूलं प्रलये विच्छेदात्, न च कारणत्वज्ञानस्य प्रवर्तकत्वे तृप्त्यर्थं कथं पाके प्रवर्तेत, तृप्तिकामनानिबन्धनौदनकामनाबलादिति गृहाण इत्येवमादयो हि ते अन्यथासिद्धिचतुष्टयाभावप्रवेशेऽपि कारणकारणवृत्त्यन्यथासिद्ध्यभावो न प्रवर्तकज्ञानविषयो गौरवादिति तत्त्वम् त्रिसूत्रीप्रकाशादिसंवादात् । अभ्युपेत्योच्यते-विधेरनन्यथासिद्ध्यर्थत्वेप्येतद्ग्रन्थस्य सुस्थत्वे तद्विचारस्य प्रकृतानुपयोग इति। कश्चित्तु विशिष्टस्य फलत्वे विशेषणफलत्वस्यावश्यकत्वान्नागृहीतविशेषणान्यायात्तस्यैव फलत्वम् । न च न लाघवानुरोधेन श्रुतेर्यथाश्रुतार्थत्यागोतिप्रसङ्गादिति वाच्यम् लाघवसहकृतमानान्तरावगतकारणताबोधकत्वेनैव श्रुतेरुन्नयनान्नत्वमितश्रुतेरिदानीं बोधकत्वमित्याह ।

अन्ये तु मङ्गलं प्रधानमदृष्टद्वारा आरब्धकर्मसमाप्तिः फलं तत्कामोऽधिकारी क्वचित्तु फलाभावः कर्मादिवैकल्यात्कारीरीवत् । न चान्यदापि करणम् । नियतकालीनतादृशाचारेण फलवत्कर्मारिप्समानस्तत्समाप्तिकामो मङ्गलमाचरेदिति श्रुत्या आरम्भसमयकर्त्तव्यताबोधनात् । यथा अग्नावैष्णवमेकादशकपालं चरुं निर्वपेद्दर्शपूर्णमा-

प्रगल्भी ।

**प्रधानाया इति** । यद्यपि प्रधानस्येतिपदं भवितुं युक्तं तथापि छन्दोविषये सिद्धमेव स्वग्रन्थेऽत्र लिखितम् । ननु दर्शपौर्णमासारम्भेच्छया क्रियमाणत्वेनारम्भणीयायां तदारम्भाङ्गता स्यादिति चेन्न—तदारम्भेच्छया क्रियमाणत्वेऽपि फलान्तरश्रवणादङ्गत्वाभावादिति भावः । ननु मङ्गलस्य कामिकार्य-

मीमांसकैकदेशिनां मतमाह—**अन्ये त्विति** । प्रधानं—नारब्धकर्मणोऽङ्गम् तथाच मङ्गलमदृष्टद्वारारब्धकर्मणोऽङ्गं सत् न समाप्तिजनकम् येनालौकिकमङ्गले लौकिके नाङ्गमिति शङ्का उदयमासादयेत् किन्तु अदृष्टद्वारा आरब्धकर्मसमाप्तिजनकम् आरब्धकर्मसमाप्तिश्च आरब्धकर्मोत्पत्तिः सा चातीन्द्रियत्वेनालौकिकीति भावः । नन्वेवं विघ्नध्वंसकामनया मङ्गले प्रवृत्तिर्न स्यादित्यत्रेष्टापत्तिमाह—**तत्काम इति** । आरब्धकर्मसमाप्तिकामनयैव मङ्गले शिष्टप्रवृत्तिरित्यर्थः । **कर्मादीति** । आदिपदेन कर्तृसाधनयोः परिग्रहः । अन्यदापि-आरब्धकर्मप्राक्कालातिरिक्तकालेऽपि । करणम्—अपूर्वं जनयत्विति शेषः । **आरम्भसमयेति** । आरब्धकर्मपूर्वसमयेत्यर्थः । अग्नावैष्णवमिति । अग्निश्च विष्णुश्च अग्नाविष्णू 'देवताद्वन्द्वेचेत्यानङ्' तौ देवताऽस्येत्याग्नावैष्णवम् । एकादशसु कपालेषु संस्कृतम् । अग्नावैष्णवमिति च्छान्दस इति

सावारिप्समान इति श्रुत्यारम्भणीयेष्टेः प्रधानाया दर्शारम्भसमयकर्त्तव्यत्वम् कामनोपाधिकार्यत्वेप्यारम्भसमये नियतमनुष्ठानम् आरब्धकर्मसमाप्त्यर्थिनोपायत्वेनावश्यन्तदनुष्ठानात्। न च काम्यत्वे परिसमाप्तिकामनां विना फलवत्कर्मारम्भेपि तदनुष्ठानं न स्यादिति वाच्यम्। समाप्तं कर्म फलायालमिति फलार्थिनः समाप्तौ कामनावश्यभावादिति।

नन्न—कारीरीजन्यातिशयवद्विहितप्रधानजन्याति-

प्रगल्भी।

त्वे कामनाभावान्नियतं तत्कारणं न स्यादित्यत आह—कामनोपाधीति। तदनुष्ठानादिति करणव्युत्पत्त्याऽनुष्ठानमिच्छा। तथा च इष्टोपायत्वेनेच्छानियमात् प्रवृत्तिनियम इत्यर्थोऽतो न साध्याविशेषः समाप्तावेव न कामनानियम इत्याशङ्क्याह—नचेति। समाप्तिविशिष्टे कर्मणि इच्छानियमात् समाप्तिरूपविशेषणेऽपि इच्छानियम इत्यर्थः।

माथुरी तु चिन्त्या। ननु मङ्गलस्याङ्गत्वेऽङ्गवैगुण्यभिया आरम्भसमये तत्करणमावश्यकमनङ्गत्वे तु नेत्यत आह—कामनोपाधिकार्यत्वे इति। फलान्तरकामनाधीनेच्छाजन्यकृतिविषयत्वे इत्यर्थः। फलान्तरकामना आरब्धकर्मसमाप्तिकामना तदधीना इच्छा उपायेच्छा तज्जन्यकृतिविषयत्वं मङ्गले मङ्गलस्यारब्धकर्मसमाप्त्युपायत्वात्। ननु यत्र समाप्तिकामनां विनैव कर्मारब्धं तत्र मङ्गले प्रवृत्तिर्न स्यादित्याशङ्कते नचेति। काम्यत्वे—आरब्धकर्मोत्पत्तिकामनाधीनकामनाविषयत्वे। फलाय-ग्रन्थप्रयोजनकीर्त्यनुवृत्तये, अलम्—समर्थम्।

विहितप्रधानजन्यातिशयत्वात्—विहितजन्यप्रधानापूर्वत्वात्। विहितजन्यप्रधानापूर्वं फलसंपादकाशेषकारणसंपादकमिति नियम इति

शयत्वात् । मङ्गलजन्यापूर्वस्यापि फलसम्पादकाशेषकारणसम्पादकतया आरब्धकर्मसमाप्त्यवश्यम्भावापत्तेः फलावश्यम्भवननिश्चयं विना वैदिककर्मान-

प्रगल्भी ।

विहितप्रधानेति । स्वरूपयोग्यत्वस्यापाद्यत्वे सिद्धसाधनादत्र तर्के फलोपहितत्वमापाद्यं बोध्यम् । विहितपदं कर्षणजन्यातिशयादौ व्यभिचारवारणाय । नचाङ्गहीनप्रधानजन्यातिशये व्यभिचारः । तेनातिशयाजननात् । अतिशयजननपक्षे साङ्गत्वेन हि प्रधानं विशेषणीयम् । नच कीर्तनादिनाशितादृष्टे व्यभिचारः । तदनाश्यत्वेन विशेषणात् । प्रतिपक्षाप्रतिरुद्धत्वेनापि विशेषणीयम् । तेन न प्रतिकृत्याप्रतिरुद्धक्रियातिशये व्यभिचारः । ननु मङ्गलजन्यापूर्वाप्रसिद्ध्याऽऽश्रयासिद्धिरिति चेत् अपूर्वपदस्यातिशयार्थत्वात् । पररीत्या वा परं प्रत्युक्तत्वात् । न च स्वपूर्ववर्त्तिकारणस्य प्रधानजन्यातिशयेनाजननात् फलजनकाशेषकारणसम्पादकत्वाभावात् व्याप्यत्वासिद्धिरिति वाच्यम् । कारणपदस्यास्योत्तरभाव्यसाधारणकारणपरत्वात् । वन्ध्यासम्प्रयोगस्थले पुत्रेष्टौ च न व्यभिचारः । परम्परा-

भावः । अत्र फलपदमिष्टपरमिति पापे व्यभिचार इति तद्वारणाय विहितजन्येति । विहितत्वं बलवदनिष्टाननुबन्धित्वेन वेदबोधितत्वम्, तेन श्येनजन्यपापे न व्यभिचारः । विहितजन्यत्वमात्रे फले व्यभिचारमित्यतः प्रधानापूर्वेति । अजनितप्रधानपूर्वाङ्गापूर्वे व्यभिचारवारणाय प्रधानेत्यपूर्वविशेषणम् प्रधानेत्यस्य विहितेन सहान्वयेऽङ्गप्रधानोभयरूप-शिखादिना अङ्गविधया जनितेऽपूर्वे व्यभिचारापत्तेः । इष्टापत्तिं परिहरति

नुष्ठानात् । न चैवं, भूयसि साङ्गेऽपि मङ्गले क्वचिदारब्धसमाप्त्यभावात् । न च तत्रामुष्मिकं फलम् ऐहिकमात्रफलत्वात् । वैदिककर्मणः फलावश्यम्भावे नागन्तुकदुरितेनाप्यप्रतिबन्धात् । किञ्च यथा कारीर्यादिकमग्रिमपुरुषव्यापारं विनैव फलहेतुः तथा मङ्गलमपि तेन विनैव हेतुः स्यात् । न चैवम् । लोकावगतकारणत्वात्तदपेक्षेति चेत्तर्हि स एव हेतुरस्तु किमनेन । आरब्धकर्मजनकादृष्टकारणसंपत्तौ पुत्रेष्टिवत्तत्समाप्तिसाधनत्वं श्रुत्या बोध्यत इति चेत् न तत्र दृष्टकारणसंपत्तौ पुत्रानुत्पादाददृष्टद्वारा पुत्रेष्टेस्तज्जनकत्वमस्तु । न च

प्रगल्भी ।

जनकत्वेन हेतोर्विशेषणात् । तथा मङ्गलमपि तेन विनेति । मङ्गले प्रवृत्तेरग्रिमपुरुषव्यापाराभावेन क्वचित्फलाभावादिति भावः । नहीति । न च विघ्नाभावार्थमेव तदङ्गीकार्यमिति वाच्यम् । मङ्गलेन साक्षाद्विघ्नाभावजननोपपत्तौ किमन्तर्गडुनाऽपूर्वेणेति भावः ।

---

नचेति । एवम्–मङ्गले कृतेऽवश्यमारब्धकर्मोत्पत्तिः । नन्वसमत्वे मङ्गलस्य दुरितानाशकतया मङ्गलात्पूर्वमुत्पन्नेन मङ्गलात्परमुत्पन्नेन वा दुरितेन प्रतिबन्धान्न फलमित्यत आह वैदिकेति । आगन्तुकेति । मङ्गलपूर्वोत्तरोत्पन्नेत्यर्थः । स्यादिति । प्रधानापूर्वजनकविहितकर्मणोऽग्रिमपुरुषव्यापारमपेक्ष्य- फलजनकत्वानियमादिति । तदपेक्षा–कण्ठादिक्रियापेक्षा । तथाच प्रधानापूर्वजनकविहितकर्मत्वं लोकावगतकारणेतराग्रिमपुरुषव्यापारमनपेक्ष्यफलकत्वस्यैव व्याप्यम् अन्यथा पुत्रेष्टौ भोजनादिद्वारा भोगजनकादृष्टकर्मणि च व्यभिचारादिति भावः । स एव–कण्ठाभिघातादिरेव । किमनेन–किं मङ्गलेन ।

कर्मनिर्वाहे दृष्टसकलहेतुसंपत्तौ विलम्बो येन मङ्गलजन्यादृष्टापेक्षास्यात् । अपि च मङ्गलं विनापि प्रमत्तनास्तिकानुष्ठितसमाप्तेर्न तत्तत्र कारणम् । जन्मान्तरीयपुण्यसंपत्तिस्तत्र हेतुरिति चेन्न तथापि व्यभिचारात् । क्वचित्पुण्यसंपत्तिः क्वचिन्मङ्गलं हेतुरिति व्रीहियववद्विकल्प एवेति चेत्तर्हि तत्संभावनया नियतं मङ्गलानु-

प्रगल्भी ।

श्रुत्येति । श्रुतेर्नियम्यत्वादिति भावः । यद्यप्यदृष्टस्य कारणता श्रुत्या न बोध्यते किन्तु मङ्गलस्य तथापि प्राभाकरमतमवलम्ब्योक्तम् । नच कर्मेति । तथा च दृष्टकारणचक्रादेव कार्यसम्भवे नादृष्टजनने श्रुतेस्तात्पर्यमितिभावः । तर्हि तत्सम्भावनेति । यदि मम जन्मान्तरीयपुण्यसम्पत्तिस्तदा मङ्गले कृते नैकमपि कार्यजनकं स्यात् । ततो विपरीतफलकं तत्करणं भवेदिति अभिसन्धानादिति भावः । नन्विष्टसाधनतासन्देहेऽपि प्रवृत्तिरस्त्विति चेत् वैदिकप्रवृत्तौ बलवदनिष्टाननुबन्धीष्टसाधनतानिश्चयस्य कारणत्वात् उक्तरीत्या उक्तस्थले तादृश-

---

तथापि व्यभिचारादिति । स्वोत्पत्त्यवच्छेदकत्वसंबन्धेन मङ्गलजन्यादृष्टस्य व्यभिचारादित्यर्थः । **क्वचित्**–विघ्नस्थलीयेतरारब्धकर्मोत्पत्तौ । **पुण्यसंपत्तिः**–कर्मान्तरजन्यपुण्यविशेषसंपत्तिः । **क्वचित्**–विघ्नस्थलीयारब्धकर्मोत्पत्तौ । **मङ्गलम्**–मङ्गलजन्यमदृष्टं, स्वोत्पत्त्यवच्छेदकजातीयत्वसम्बन्धेन फलीभूतारब्धकर्मोत्पत्त्यधिकरणशरीरनिष्ठतया हेतुरित्यर्थः । **व्रीहियववदिति** । यथा परस्पराभावविशिष्टत्वेन व्रीहिकरणकयवकरणकयागयोः कारणत्वं तथा प्रकृतेऽपि विघ्नस्थलीयेतरसमाप्तौ स्वोत्पत्त्यवच्छेदकजातीयत्वसंबन्धावच्छिन्नप्रतियोगिताक-

ष्ठानं न स्यात् यवप्रयोगे व्रीहेरिव विकल्पे चोभयस्या-शास्त्रार्थत्वात् । ननु विधिवाक्यं न फलनियतपूर्व-सत्वं बोधयति किन्तु मङ्गलात्फलविश्यंभावमिति चेत् न इष्टसाधनत्वस्य विध्यर्थत्वात् । अथान्वयव्यति-रेकाभ्यां तद्ग्रहे व्यभिचारो दोषाय न त्वागमेन तद्ग्रहे। तदुक्तमागममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषा-

प्रगल्भी ।

निश्चयाभावात् प्रवृत्त्यभावप्रसङ्गादितिभावः । यवप्रयोगे व्रीहे-रिवेति । यथा एकस्मिन्यागे विकल्पः साधनत्वेन प्राप्तयोर्व्रीहि-यवयोर्यवप्रयोगे कृते न व्रीहिप्रयोग इत्यर्थः । ननु वैकल्पिकं कारणद्वयं कथमेकत्र न युज्यते इत्यत आह–विकल्पे चेति । वैकल्पिककारणयोः परस्परप्रतिक्षेपेणैव प्राप्तत्वेन परस्परविरहवतोरेव

मङ्गलजन्यपुण्यविशेषाभावविशिष्टकर्मान्तरजन्यपुण्यविशेषत्वेन कारणत्वं विघ्न-स्थलीयसमाप्तौ च कर्मान्तरजन्यपुण्यविशेषाभावविशिष्टमङ्गलजन्यपुण्य-विशेषत्वेन करणत्वं वैशिष्ट्यं च एककालावच्छेदेन एकशरीरवृत्तित्वमित्यर्थः । **उभयस्य**–मिलितस्य । **अशास्त्रार्थत्वात्**–शास्त्रबोधितफलाजनकत्वात् । **फलावश्यम्भावं**–मङ्गलेतरसकलकारणसमवधाने सति मङ्गलात् फलावश्यम्भावमित्यर्थः । तथा च विधिना मङ्गले समाप्तिसाधनत्वस्याबोधनाद् व्यतिरेकव्यभिचारो न दोषायेति भावः । **इष्टेति** । तथा च समाप्ति-साधनत्वं विधिना बोध्यते इति व्यतिरेकव्यभिचारस्तद्दूषक इति भावः । **तद्ग्रहे**–कारणताग्रहे । **व्यभिचारः**–व्यतिरेकव्यभिचारज्ञानम् । **आग-मेन**–वेदेन । **तदुक्तमिति** । द्रव्यकिरणावल्यामाचार्यचरणैरिति शेषः ।

येति । अत एव यागादेः स्वर्गसाधनतेति चेतन्न नियतपूर्वसत्त्वस्य ग्राह्यस्याभावादागमेनापि बोधयितुमशक्यत्वात् यागजनितस्वर्गे कारीरीजनितवृष्टौ च जातिविशेष एवास्ति ।

प्रगल्भी ।

जनकतयैकत्रोभयस्याजनकत्वादित्यर्थः । नियतपूर्वसत्त्वस्येति । ननु दुःखप्रागभावसाधने प्रत्यवायप्रागभावसाधनादौ प्रायश्चित्ते सन्ध्यावन्दनादौ च प्रवृत्तिर्न स्यात् प्रागभावस्य प्रागभावाभावेन प्रागभावपूर्वकालवृत्तित्वस्य तत्र तत्राभावे तद्घटितकारणत्वस्यानन्यथासिद्धनियतपूर्ववर्त्तित्वस्याभावात् नचोत्तरसमयसम्बन्धस्य साध्यतात प्रागभावस्येति वाच्यम् तस्य स्वरूपसम्बन्धरूपत्वेन प्रागभावसमयरूपतयाऽतिरिक्तत्वाभावात् किञ्च तादृशसम्बन्धत्वेन रूपेण तदुत्तरसमयसम्बन्धस्य स्वतोऽपुरुषार्थतया तत्साधनत्वेन प्रायश्चित्तादौ प्रवृत्त्यभावापत्तेरिति चेन्न-येन हि रूपेण फलस्य साध्यता तद्रूपाक्रान्ताधिकरणकालोपाधित्वावच्छिन्नप्रतियोगिकपूर्वकालवृत्तित्वस्य पूर्वकालवृत्तिशब्देनाभिधानात्प्रामाणिकत्वेन तु गौरवस्यादोषत्वात् सम्भवति च प्रायश्चित्ताद्युत्तरसमयवर्त्तिप्रागभावत्वेन प्रागभावानां साध्यतया तादृशरूपावच्छिन्नप्रागभावसम्बन्धिकालोपाधिपूर्वसमयवर्त्तित्वं प्रायश्चित्तादीनामिति दिक् ।

**अस्यार्थस्य**–मङ्गले समाप्तिकारणत्वग्रहस्य । **स्वर्गसाधनता**–वेदेन स्वर्गसाधनताग्रहः । अन्यथा गङ्गास्नानादितोऽपि स्वर्गोत्पत्त्या व्यभिचारेण कारणताग्रहो न स्यादिति भावः । **बोधयितुं**–प्रमापयितुम् । आगमजन्यज्ञानस्य प्रमात्वापातादिति यावत् । नन्वेवं यागादौ कथं वेदेन स्वर्गसाधनता प्रमेयत आह-यागेति ।

आलोकः ।

विहितेति । अत्रातिशयत्वमदृष्टत्वम् । न च विहितपदवैयर्थ्यं, पापे व्यभिचारात् फलस्येष्टरूपत्वात् । न च तदेवास्तु न तु प्रधानपदम्, अङ्गापूर्वे व्यभिचारात् । वस्तुतस्तु तत्त्वेन जनकत्वं

आलोकदर्पणः ।

अत्रेति । कलिकापूर्वभिन्नत्ववेदबोधितनाशकानाश्यत्वाप्रतिरुद्धत्वानि विशेषणानि आग्नेयजन्यस्य कीर्त्तननष्टस्य प्रतिकृत्या प्रतिरुद्धस्यापूर्वस्य वारणाय देयानि । ननु प्रधानत्वेन प्रधानजन्यातिशयस्येत्यवश्यं वाच्यम्अन्यथा शिखाबन्धनादिजन्याङ्गापूर्वे व्यभिचारात्, तथा च विहितपदमप्रसिद्धिवारकमेवास्तु, प्रधानत्वेन जनकत्वस्याप्रसिद्धेः किमिति फलपदस्य विशेषपरताक्लेश इत्यभिप्रेत्याह—वस्तुत इति । शिखेति ।

आलोककण्टकोद्धारः ।

पुत्रेष्टिः पुत्रत्वावच्छेदेनेव समाप्तित्वावच्छेदेनैवादृष्टद्वारा मङ्गलं हेतुर्न तु विघ्नध्वंसेपि स हेतुरदृष्टेनैव तु स्वकार्यार्थं शरीरादिवत्स जन्यत इति नान्यत्रेत्याद्यन्यथासिद्ध्यवकाश इति वेदान्तिमतमाह— अन्ये त्विति मूलम् । दोषान्तरमपि पुत्रेष्टिसाम्येनैव समाधेयमिति भावः । औषधपानेन लोकागम्यत्वाद्विहितेन जनिते अतिशये व्यभिचारादाह—अतिशयत्वमदृष्टमिति । न च निरङ्गप्रधानजनितादृष्टे व्यभिचारः प्रधानपदस्य साङ्गतत्परत्वात् । नच निषिद्धगमनादिनाशिते व्यभिचारः फलेतरानाश्यत्वेनापि विशेषणात् प्रतिकृत्यापूर्वप्रतिबद्धे कृत्यापूर्वे व्यभिचारभिया अप्रतिरुद्धत्वमपि देयम् । अत्र च मङ्गलं यदि यथोक्तापूर्वजनकं स्यात् फलसंपादकाशेषसंपादकापूर्वजनकं स्यादित्यापादने तात्पर्यम् यथाश्रुतानुमाने आश्रयासिद्धेरित्याहुः । एकस्य द्वैरूप्यमनुसृत्याह— वस्तुतस्त्विति । अत्र कृत्यापूर्ववदपूर्वान्तरेण नाशप्रतिबन्धयोः संभव इत्यस्वरसान्मूले किंचेत्युक्तम् । न च प्रहरपाच्यन्नादावदृष्टं विना

आलोकः ।

विवक्षितम् अन्यथा शिखोपवीतधारणापूर्वादौ व्यभिचारात् । तस्याङ्गप्रधानोभयरूपत्वात् । अत एवोभयपदसार्थकता अपूर्वविशेषं प्रति विहितप्रधानत्वेनैव जनकत्वादपूर्वसामान्यं प्रति विहितत्वेनेति भावः । मेघसंचारवदग्रिमपुरुषव्यापारमदृष्टमेव घटयेदित्यरुचेराह–

आलोकदर्पणः ।

शिखाबन्धनादिजन्याङ्गापूर्वादावित्यर्थः । अत्र कल्पे अतिशयपदं कार्यसामान्यपरमेव ध्वंसादौ तत्त्वेन जनकत्वाभावादिति । वेदबोधितेत्यादिविशेषणद्वयमिहापि देयम् । आगन्तुकेति मूलम् । प्रतिकृत्यादिजनितभिन्नत्वेनेति शेषः । ननु प्रतिकृत्यादिजनितविघ्नान्तरेण प्रतिरुद्धत्वात्स्वरूपासिद्धिरित्यस्वरसात् किंचेति मूलम् तत्रास्वरसमाह–मेघेति । तर्हि तत्सम्भावनयेति मूलोपरि शङ्कते–अत्रेति । एकविषयत्वाभावात्–एकधर्मावच्छिन्नोपस्थितिकविषयत्वाभावात् ।

आलोककण्टकोद्धारः ।

न गतिरिति वाच्यम् पूर्वपूर्वध्वंसावच्छिन्नचरमवर्णहेतुत्वेनाप्युपपत्तेः तथापि यत्रोत्तराङ्गेन मङ्गलस्य साङ्गता तत्रातीतत्वात् कथं विघ्नध्वंसकतेति चेत् अस्तु तत्र विघ्नध्वंसार्थमदृष्टम् 'ननु समाप्त्यर्थ'मिति ग्रन्थार्थः तत्र दृष्टेनोपपत्तेः यत्र तु विघ्नध्वंसेन तेनोपपत्तिः तत्र तत्स्वीकारेऽपि क्षतेरभावादिति वस्तुगतिः । तत्रापि चरमव्यापारस्यैव हेतुत्वमित्यङ्गसमाधानमङ्गप्रधानभाववैपरीत्यापत्तेः । ननु पूर्वोक्तमवच्छेदकं भवत्येवेत्यत आह–विघ्नाभावापेक्षायामिति। नन्विति। यद्यप्यवच्छेदकभेदेन वैकल्पिकतेत्युक्ते कथमियं शङ्का तथापि क्वचिदित्यादिमूलग्रन्थस्यावच्छेदकभेदे तात्पर्यम् । अन्यथानुपदोक्तव्यभिचारानुद्धारादिति तत्रेयं शङ्का समाहितायां चास्यां व्रीह्यादौ प्रत्यक्षविधावाकाङ्क्षानुरोधेन परस्पराभावापेक्षणेऽपि प्रकृते तद्बीजाभावान्न

आलोकः ।

अपिचेति । अत्रापि यद्यपि मङ्गलस्य समाप्तिविशेषे तदन्यविशेषे समाप्तिसामान्ये वा सुकृतसंपत्तेर्हेतुत्वादेकविषयत्वाभावान्न वैकल्पिकता तथापि विघ्नाभावस्यानवच्छेदकतया विशेषान्तरस्यासंभवेन विघ्नाभावापेक्षायामपूर्वे मानाभावान्नायं प्रकारो घटत इति भावः । ननु जातिभेदकल्पनायामविशेषादश्वमेधवाजपेययोः स्वर्गजनकत्वे किन्न विकल्पः, मैवम्, वाशब्देनान्यतरकोटिप्रतिक्षेप

आलोकदर्पणः ।

अतोऽग्रे व्यवस्थाप्यस्य विकल्पे भिन्नविषयत्वस्य न विरोधः । विकल्पेऽप्येकधर्मावच्छिन्नं प्रत्येव द्वयोर्जनकत्वमित्येकदेशिमतेन वा शङ्केयम् । न वैकल्पिकतेति । तथा च वैकल्पिककारणतानभ्युपगमादेकदेशिना विकल्पपदेन भिन्नभिन्नकार्यजनकत्वस्याभिधानात्तर्हीत्यादिमूलमसङ्गतमितिशङ्कार्थः । अनवच्छेदकतयेति । अन्यथासिद्धिभीत्या समाप्तित्वेनोपस्थितां समाप्तिं प्रत्येव मङ्गलस्य प्रथमहेतुत्वग्रहो न तु विघ्नाभावपूर्वकसमाप्तित्वेनेति भावः । विघ्नाभावापेक्षायामिति । विघ्नध्वंसजन्यसमाप्तित्वस्यावच्छेदकत्वे आवश्यकविघ्नध्वंसस्यैव द्वारत्वे अपूर्वे मानाभावेनापूर्ववादिनामेकदेशिनां नेयं शङ्का घटत इत्यर्थः । यद्यपि समाप्तिकामो मङ्गलमाचरेदिति मङ्गलस्य समाप्तित्वेनोपस्थितां प्रति कारणताग्रहान्मङ्गलाप्रयुक्तविघ्नविरहस्थलीयसमाप्तौ तदनुरोधेन सुकृतकारणताबोधकश्रुतिकल्पनात्सशङ्को भवत्येव तथाप्यवश्यकल्प्यप्रतिबन्धकसंसर्गाभावेनान्यथासिद्धेः श्रुतेः प्रयोजकत्वमात्रपरताया हेतुताग्राहकमानाभावाच्च नायं कल्प इति भावः । मैवमिति । परस्परा-

आलोककण्टकोद्धारः ।

विकल्प इत्याशयेन—यद्यपीत्यादिशङ्कत्याथः क्रमो बलवान् इत्याभाति, तथा च सत्यामपि सुकृतसम्पत्तौ विघ्नस्थलीयसमाप्तिर्न मङ्गलं विना कृतेऽपि मङ्गले सुकृतसम्पत्त्या न तदभावस्थलीयसमाप्ति-

आलोककण्टकोद्धारः ।

विरोध इति निःशङ्कं प्रवर्त्ततैवेति भावः । वाशब्देनेति । ननु कथमत्र विकल्पपूर्वाकाङ्क्षानियमः समुच्चयेनाप्यन्वयसंभवात् । भवति हि व्रीह्यभावे केन पुरोडाश इत्याकाङ्क्षावत् व्रीहीणां किंसाहित्येन पुरोडाशप्रकृतित्वमित्यप्याकाङ्क्षा एकद्रव्योपदेशेन स्वारसिकाकाङ्क्षाविरहेऽपि श्रुतान्वयानुपपत्त्या कल्पनस्योभयाकाङ्क्षासाधारण्यात्, तथापि किं विनिगमकमिति चेत्, विकल्पस्य "प्रमाणत्वाप्रमाणत्वपरित्यागकल्पनात्। तदुज्जीवनहानाभ्यां प्रत्येकस्याष्टदोषते"त्युक्ताष्टदोषग्रासः । अथ समुच्चयः किमुभाभ्यां मिश्रिताभ्यामेकपुरोडाशनिष्पादनेन किं वा पृथक्पुरोडाशयोर्यागाभ्यासेन । नाद्यः परस्परानपेक्षव्रीहियवप्रकृतिताबोधकविधिद्वयस्यापि बाधापत्तेः ।

न च निरपेक्षश्रुतयोरपि प्रयाजानुयाजयोरिव प्रयोगविधिः समुच्चयबोधकः तस्योत्पत्तिविनियोगविध्यनुसारेण प्रवृत्तेः । नह्यन्यथोत्पन्नमन्यथा वा विनियुक्तमन्यथाप्रयोगविधिः प्रयोजयति विनियोगविधिश्च नैरपेक्ष्येणैवेत्युक्तम्। प्रयाजादीनां त्वदृष्टोपकारभेदान्न नैरपेक्ष्यबाधः। नापरः अङ्गद्रव्यानुरोधेन प्रधानयागाभ्यासानौचित्यात् । न च बृहद्रथन्तरयोः साम्नोः प्रकृतौ पृष्ठनामकस्तोत्रे विकल्पेन विहितयोः विकृतावप्यतिदेशेन तथैव प्राप्तौ गोसव उभे कुर्यादिति समुच्चित्य विधानेनाङ्गसामानुरोधेन प्रधानस्तोत्रावृत्तिर्दृष्टेति वाच्यम् । तद्वदत्र व्रीहियवाभ्यामित्यङ्गसमुच्चयबोधकवचनाभावात् । नन्वैन्द्रवायवादिदशग्रहग्रहणानुरोधेन प्रधानसोमयागस्य दशधावृत्तिः तादृशवचनं विनापि दृष्टेति तद्वदिहापि स्यादिति वाच्यम् । वैषम्यात् । तथा हि तत्राभिषवादिविध्यनुरोधेन दशमुष्टिपरिमितसोमलतायाः रसद्वारतावद्यागसाधनत्वम्, रसस्य चैन्द्रवायवाद्युद्देशेन पात्रविशेषेण ग्रहणं संस्कारतया विधीयते । न च तावतो रसस्य नियतपरिमाणेनैकेन ग्रहपात्रेण ग्रहणं सम्भवतीति पृथक्

आलोककण्टकोद्धारः ।

पृथक् पात्रे तत्तद्देवतोद्देशेन दर्शैकदेशस्य पृथक् पृथग् ग्रहणानि कार्यभेदात् समुच्चीयन्ते। एवं च यावद् यदुद्देशेन गृहीतं तावत् तस्यै देवतायै त्यक्तव्यमित्यर्थात् पृथगावृत्तिः न त्वेकदैव एकां कांचिद्देवतामुद्दिश्य वा एकपात्रस्थेनैव वा यागः अन्येषां यागानुपयोग एवेति तथा सति हि पृथक्करणं देवताविशेषोद्देशेऽधिकग्रहणं चादृष्टार्थानि भवेयुः। न च दृष्टसंभवे तथा युक्तं व्रीहियवादौ तु न तथानुपपत्तिरस्तीति न प्रधानस्याङ्गानुरोधेनावृत्तिरिति चेत् मैवमुक्तरीत्या व्रीह्यादिविधेः समुच्चयार्थतया प्रधानावृत्तेरौचित्यात् तस्मात् सम्भवत्समुच्चयानां नास्त्येव क्वापि विकल्प इति उच्यते व्रीह्यादिविधिना नैरपेक्ष्येण साधनताबोधान्न समुच्चयाकाङ्क्षेति, न समुच्चयसंभवः शास्त्रद्वयबाधापत्तेः। अथ व्रीह्यादेः नैरपेक्ष्यं न पदवाक्ययोरर्थ इति किं तत्र मानम्, पृथग्विभक्तिश्रवणमिति चेत्, न प्रासादे पर्य्यङ्के शेते इत्यादौ सापेक्षेपि तद्दर्शनादिति चेत्, न व्रीहियवशास्त्रयोः परस्परापेक्षायां मानाभावेन भिन्नवाक्यतया परस्परानपेक्षस्वार्थप्रकृतिताबोधकत्वेन समुच्चयस्याप्रमाणकत्वात्, किं च द्रव्यविधीनां क्रियासामान्याक्षिप्तविषयतया नियमविधित्वेनाप्राप्तांशपूरकत्वेन व्रीहिभिरेव यजेतेत्येवमितरव्यवच्छेदपर्य्यवसन्नतया नैरपेक्ष्यलाभात् समुच्चयबाधः, तस्मान्नित्यवदाम्नातानां समुच्चये मानाभावात् बाधकसत्वाच्चानायत्याऽष्टदोषदुष्टोऽपि विकल्प आश्रीयते, तदाहुः "एवमेषोऽष्टदोषोपि यद्व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यत" इति। नन्वस्त्वेवं तथापि व्रीह्यन्वयानन्तरं यवान्वये विकल्पमुख्या एवाकाङ्क्षायाः संभवेन तत्र व्रीह्यभावस्यावच्छेदकत्वेपि न व्रीहिषु यवाभावोऽवच्छेदको मानाभावात्। न चायमेव विकल्पशब्दार्थः, अनुकल्पसाधारण्यात्, अत एव यत्र परस्परप्रतिक्षेपेणान्वयस्तत्र विकल्प इति सादित्यामित्यत्र? श्रोद्ताह्निकम्, अन्यथा

आलोककण्टकोद्धारः ।

संभेदे उभयानर्थक्यमित्यपि न स्यात् पूर्वाभावाभावेनोत्तरस्यानर्थक्येपि पूर्वस्य तद्वीजाभावात्। एतेनानुकल्पे न पूर्वाभावोऽपरस्यावच्छेदकः किंतु तदनुष्ठानासामर्थ्यमन्यत्राधिकारितावच्छेदकं प्रभुः प्रथमकल्पस्येत्यादिवचनात् न त्वेवं विकल्पे व्रीहिप्रयोगसामर्थ्येपीच्छया यवप्रयोगादितिभेदकमपास्तम् । संभेदे उभयानर्थक्यस्य तद्वदेवानुपपत्तेरिति । अत्राभाति यत्र वार्त्तनिकमेकक्रिया ऽसामर्थ्यो·पादानं तत्रानुकल्पः, यथा अशिरस्कं भवेत् स्नानमित्यत्र यत्र त्वेकद्रव्यासामर्थ्योपादानं तथा तत्र प्रतिनिधिः यथा यदि सोमं न विन्देत्पूतिकानभिषुणुयादित्यत्र यत्र वा फलभूमाभाव विषमशिष्टत्वं तत्रापि तदुभयरूपत्वं यत्र तु नैवं तत्र पाठक्रमस्यान्वयक्रमानियामकत्वेनाविशेषादुभयाभाव उभयत्रावच्छेदक इति विकल्पः यथा व्रीह्यादौ नहि तयोः स्वार्थप्रमापणे पौर्वापर्य्यं मानाभावात्, अत एवाभ्यासेन कर्मभेदाधिकरणे प्रयाजविधिषु पञ्चसु न प्रथमविहितानुवादकत्वमुत्तरेषां विधायकत्वे विनिगमकाभावादिति सिद्धान्तः, तदुक्तं "परस्परानपेक्षाणि हि समिदादिवाक्यानीति सर्वाण्येव प्राथम्यार्हाण्यपि युगपदध्ययनानुपपत्तेः क्रमेणाधीतानी"ति । एतच्चैकोद्देशेनाविषमयोः स्वतन्त्रयोर्विधानात् तदप्येकप्रकरणपाठाद्वाकाराद्वा अन्यात्वागम्यत इति नाश्वमेधादौ प्रसङ्ग इति तात्पर्यनिष्कर्षः । इदन्त्वेच्छिकविकल्पस्य स्वरूपं प्रकृतोपयोगात् नतु व्यवस्थितस्येति ध्येयम् । मान्यास्तु यत्रैकरूपेणैकपदोपस्थाप्यकर्मणोद्रव्याद्याकाङ्क्षायामुदितादिकालव्रीह्यादिद्रव्यविध्यनन्तरं तदनुरोधेन वैजात्यकल्पनं तत्र वैकल्पिकता वाजपेयादौ तु नैवमिति परिभाषामन्यन्ते, तस्माद्वैकल्पिकयोरवच्छेदभेदेनैवाव्यभिचारार्थं हेतुत्वमिति । अत्र वदन्ति भिन्नावच्छेदेन कारणत्वे विकल्पमुक्त्वैवाकाङ्क्षा न स्यात् । एकस्य साधनावरोधेऽपि द्वितीयस्यानवरोधनाकाङ्क्षाऽविरोधात् एकजातीय

आलोककण्टकोद्धारः ।

एव तादृशव्युत्पत्तेः अन्यथा वाजपेयादावपि तथात्वापत्तेः । किंच प्रधानविधिविहिते कथंभावाकाङ्क्षायां व्रीह्यादिविधिप्रवृत्तिस्तादृशविधिना चैकत्रैव द्वयोःसाधनत्वं बोधयितुं शक्यते भेदेनानुपस्थितेः । न च व्यभिचारः, प्रकृताकाङ्क्षाप्रवृत्तविधिबोध्यद्रव्यत्वेनानुगमात्, कार्यगतजातिद्वयापेक्षया कारणगतैकरूपकल्पने लाघवात् । न चैवं वाजपेयाश्वमेधादीनामपि स्वर्गार्थिकर्तव्यतया वेदविहितत्वमेव स्वर्गजनकतावच्छेदकं स्यादिति न तत्रापि कार्यवैजात्यं कल्प्येत, उपस्थितत्वेनाश्वमेधत्वादिनैव हेतुत्वकल्पनात्तत्र तथेति तु प्रकृते पि तुल्यमिति वाच्यम् विषमशिष्टानां फलभूम्न आवश्यकतया त त्प्रयोजकताकारणवैजात्यस्यावश्यकत्वात्, प्रकृते तुल्यशिष्टत्वान्नैवमिति । अत्र ब्रूमः । सिद्धे हि साधनद्वयसम्बन्धे तत्र इच्छार्थं वैजात्यकल्पना नतु ततः प्राक् तथा च साधनान्वयदशायामेकरूपेणोपस्थितैकसाधनान्वये साधनान्तरनैराकाङ्क्ष्यं युक्तमेवेति युक्ता विकल्पप्रमुख्याकाङ्क्षा, । किंचेत्याद्यप्यसत् उपस्थितप्रकाराव-च्छेदेनान्वये आकाङ्क्षाया नियामकत्वात् । ततस्तदवच्छेदेनान्वये तद्रक्षार्थं व्यक्त्यैक्यत्यागवत् जात्यैक्यत्यागस्याप्युचितत्वात् । यत्त्वेकरूपेण द्वयोः कारणतेति, तदप्यसत्, एवं समुच्चयेऽपि फलहेतुतापत्तेः अन्यतराभावसहकृतत्वप्रवेशे चातिगौरवात् अनुगमासंभवाच्च, अन्यान्यत्वादेः समुच्चितसाधारण्याच्च । किंच वैदिके कार्ये श्रुतरूपपरित्यागो वहुषु दृष्टो नतु कारणे क्वापीति । अपि च लौकिकवैकल्पिकतृणादीनामप्येवमनुगतरूपेण हेतुत्वे वह्निवैजात्यकल्पनानुपपत्तिः । न च तत्र सहकारिप्रतिनियमानुपपत्तेर्न तथा तृणफूत्कारादिसम्बन्धत्रयस्याप्यनुगतरूपेण हेतुत्वादेवोपपत्तेः । ननु व्रीह्यादिसन्निपात्यङ्गानामुत्पत्त्यपूर्वं एव साधनता न तु परमापूर्वे फले वा तथा च त्वदुक्तरीत्या कर्मणि भेदः कल्प्यः, स च

आलोककण्टकोद्धारः ।

शब्दान्तरादिप्रमाणषट्कं विना दुष्कल्पः द्रव्यभेदस्योत्पन्नशिष्टतया ऽऽमिक्षावदुत्पत्तिशिष्टत्वाभावेनाभेदकत्वात्. तस्मात् परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपपारार्थ्यलक्षणं शेषत्वं विधिगतं निरपेक्षश्रुतिबलात् प्रत्येकमेवेति न समुच्चयानुष्ठानम् । तन्निव ..कं तु परं कारणत्वं लोकसिद्धपुरोडाशप्रकृतितावच्छेदकानुगतधर्म एनैव, एवं चैक कार्यकारणताव्याप्यधर्मद्वयावच्छेदेन शेषा ंशे विकल्प इति तन्त्रमारविदः । तन्न प्रयोगविधिना प्रयाजा ामेव समुच्चयापत्तेः कारणतायां विकल्पाभावात् शेषतायां परस्प रसाहित्ये प्रयाजादाविव मानाभावात्, किंच षोडशिग्रहणा योर्नैकरूपेण जनकता कार्यैक्येन ग्रहणस्याननुष्ठानापत्तेः, न र्मभेदकमानाभावः वैकल्पिकगुणस्याप्युत्पत्तिशिष्टवत् स्वाभेद दकल्पकत्वादित्याशयः । नव्यास्तु कार्यवाचकैकपदे श्रुतरूप ागस्य लघुत्वादस-म्भवेनावश्यकत्वाच्च तदेवोचितं नतु कारण पदद्वये गौरवादनावश्यकत्वाच्च, तथा चौत्सर्गिकतया प्र पदे प्रवृत्तिनिमित्त-विशिष्टपरतैवेति न रूपान्तरोपलक्षकत्वमित्य : । अचिन्त्यं स्वर्गापूर्व-गतजातिचतुष्टयापेक्षया तथापि लाघवादि एव द्वितीयनिबन्धे उदितादिव्याघातप्रकरणे विकल्पे स्वर्ग ्यत्नहेतुकत्वमाशङ्कय उदितादिहोमसमेदेन तस्याप्यवान्तरजा ।इति कण्ठरवेणोक्तं तस्माद् व्यक्तिसिद्धान्तिविरुद्धमिदमनादेयम् तत्तु उक्तपरिभाषाया-मपि न मङ्गले वैकल्पिकता प्रत्यक्षश्रुत्यभा पागभावस्यावच्छेदकत्वे मानाभावादिति. तदनाकलितालोक व्यवस्थानम् तथापी-त्यादिना सिद्धान्तान्तराभिधानेनावैकल्पि स्वीकृतत्वादित्या-स्ताम् । यत्तु महार्णवे उक्तम्—अनन्यथासिद्ध सति कार्यव्याप्यत्वं तृणादिव्रीह्यादिवैकल्पिकसाधारणं कारणत्वं नैकशक्त्यपेक्षा कार्यवैजात्यं वा न तु व्यापकत्वं तत्त्वं विधि गम्नाभावात् । अतएव स्वस्वव्याप्येतरेत्यादिलक्षणमुक्तम्, किं च अ वर्तकतया विध्यर्थ-

आलोकः ।

वाचिना यत्रान्यतरसत्त्वमपरकार्योत्पत्तिप्रतिबन्धकं तत्र विकल्पो नेतरस्मिन्निति वस्तुस्थितिः । यद्यपि वाशब्दोऽत्र नास्ति तथाप्येकसाधनावरुद्धतया विकल्पमुख्या एवान्यसाधनाकाङ्क्षायाः संभवेन तथैव हेत्वन्तरान्वयादिति भावः ।

आलोकदर्पणः ।

भावसहकृतयोर्द्वयोर्यत्र कार्यविशेषौ प्रति जनकत्वं परस्पराभावकालीनौ कार्यविशेषौ प्रति वा यत्र जनकत्वं द्वयोस्तत्र विकल्पः । स चायन्तत्रैव यत्रैकधर्मावच्छिन्नोपस्थितिकं कार्यं प्रत्येकं कारणमुक्त्वा वाशब्दप्रयुक्तमेकप्रकरणाम्नातं वा कारणान्तरं विधीयते नचैतद्वाजपेयादिषु वाशब्दाभावात् एकप्रकरणानाम्नानाच्चेति प्रघट्टकार्थः । केचित्तु यागाकाङ्क्षाप्रवृत्तविधिबोध्यत्वेन द्वयोरनुगतेन रूपेण एकजातीयं प्रत्येव जनकत्वं वैकल्पिककारणतामाहुः । तन्न यवप्रयोगे व्रीह्युपादानप्रसङ्गादिति । व्रीहियवान्यतराभावावच्छिन्नविधिबोध्यद्रव्यत्वेन कारणत्वम् व्रीहियवान्यतराभावावच्छिन्नत्वेन वा कार्यत्वमिति तु सम्भाव्यते गौरवभीत्या न चिन्त्यते ।

आलोककण्टकोद्धारः ।

एवे यागादौ फलावश्यंभावानिश्चयादप्रवृत्त्यापत्तिः सहकारिविरहेण यागात् फलाभावेपि तद्व्यापकत्वाक्षतेरिति तदाशङ्कते— ननु विधिवाक्यमितिमूलम् । व्याप्यत्वं न शुद्धकारणे ग्रहीतुं शक्यं किन्तु कार्याभावव्याप्याभावप्रतियोगिसकलसमवधानावच्छेदेनेति गुरुप्रतिपत्तिकत्वान्न तथा किन्तु शुद्धकारणग्राह्यं लघुप्रतिपत्तिकं व्यापकत्वमेव वैदिके फलावश्यंभावनिश्चयः त्वन्मतेपि विधिशक्त्यन्तराक्षेपाद्वा सहकारिसम्पन्नस्य व्याप्यत्वेपि तदभावे शङ्काया दुर्वारत्वादित्याशयेन परिहरति इष्टसाधनस्येति मूलम् । तथैव प्रतिबन्धकाभावस्येति मूलम् । फलहेतुत्वव्यापारजन्यत्वयोरेकावच्छेदेन सम्भवतोस्त्यागायोगादिति भावः । धर्माधर्मस्येत्यादिमतानुसारेण च न नित्यवृत्तित्वं बाधकमिति भावः ।

अपरे तु मङ्गलस्यारब्धनिर्व्वाहकत्वं विघ्नसंसर्गाभावद्वारा, तथैव प्रतिबन्धकाभावस्य हेतुत्वात्। स चाभावः सतो विघ्नस्य ध्वंसो ऽनागतस्यानुत्पादश्च कर्मनिर्व्वाहसमयस्थायी। विघ्नकारणविनाशद्वारा प्रागभावस्य साध्यत्वं यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तदेव तस्य तज्जन्यत्वं न त्वसतः

प्रगल्भी।

स्वीश्वरमतं दूषयितुमुपन्यस्यति-अपरे त्विति। यस्मिन्निति। असत्त्वान्तर्भावेऽपि पारिभाषिकमिदं साध्यत्वम्। यद्व्यतिरेक इति। नन्वेतदयुक्तं मङ्गलव्यतिरेकेऽपि मङ्गलपूर्वसमयविघ्नप्रागभावस्य सत्त्वात्। तस्यानादित्वात्। किञ्च चन्द्रोदयसमुद्रवृद्ध्योस्तुल्यकालोत्पत्तिकयोरपि कार्यकारणभावः स्यात्। एवं सव्येतरविषाणयोरपि तथा स्यात् उक्तलक्षणसत्त्वात्। किञ्चा-

---

मङ्गलमपूर्वं जनयति तेन च विघ्नसंसर्गाभावो जायते तेन च समाप्तिर्जन्यत इति स्वजन्यापूर्वजन्यविघ्नसंसर्गाभावद्वारा मङ्गलस्य समाप्तिहेतुतेति वदतां केषांचिन्मीमांसकानां मतमाह—**अपरे त्विति**। निर्व्वाहकत्वं—समापकत्वम्, विघ्नसंसर्गाभावद्वारा—स्वजन्यापूर्वजनितविघ्नसंसर्गाभावद्वारेत्यर्थः। ननु विघ्नप्रागभावस्य कथं मङ्गलजन्यापूर्वजन्यतेत्यत आह—**विघ्नकारणेति**। ननु विघ्नकारणस्य निषिद्धकर्मणो मङ्गलेन नाशायोगादिदं चिन्त्यमिति चेन्न विघ्नकारणं मङ्गलप्रागभावः तन्नाशविधयेत्यर्थकरणेनादोषात्। ननु तथापि प्रागभावस्याजन्यत्वात्कथं तस्य साध्यत्वमुच्यते इत्यत आह—**यस्मिन्निति**। ननु यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वमित्यत्र यद्व्यतिरेके

प्रगल्भा ।

काशादिव्यतिरेकस्य कालतो देशतश्चासम्भवात् शब्दस्याकाशादिसाध्यता न स्यात् । ननु स्वस्वव्याप्येतरप्रागभावनाशकसकलसमवधाने सति अनन्यथासिद्धयद्व्यतिरेके तादृशसमवधानाग्रिमक्षणे यद्व्यतिरेकः यत्सत्त्वे तदा तत्सत्त्वं तत्साध्यमित्यर्थे नोक्तदोषः सम्भवति । विघ्नप्रागभावनाशकसकलसमवधाने सति मङ्गलव्यतिरेके विघ्नप्रागभावव्यतिरेकः सति च मङ्गले तत्सत्त्वम् । एवं दण्डदण्डव्याप्येतरघटप्रागभावनाशकसकलसमवधाने सति अग्रिमक्षणे दण्डव्यतिरेके घटव्यतिरेकस्तस्मिन् सति दण्डदण्डव्याप्यसत्वे च सति भवत्यग्रिमक्षणे घटसत्त्वमिति घटो दण्डसाध्यः एवमन्यत्रापि योगक्षेमसाधारणमिदमिति चेत् । न । शब्दादौ आकाशादिसाध्यता न स्यात् । विघ्नप्रागभावनाशकसकलसद्भावे सति मङ्गलसत्त्वेऽग्रिमक्षणे प्रागभावसत्त्वमिति वक्तुं विरोधात् । नहि मङ्गलसत्त्वे सकलविघ्नप्रागभावनाशकसमवधानमस्ति । मङ्गलरूपप्रतिबन्धकाभावासत्त्वात् । किञ्च प्रागभावनाशकेत्यनेन साध्यत्वेन यदभिमतं तत्प्रागभावस्यावश्यवाच्यत्वे विघ्नप्रागभावस्य प्रागभावाप्रसिद्धौ प्रकृते तल्लक्षणासम्भवात् । तस्मात्स्वस्वव्याप्येतरसकलकारणसत्त्वे सति यद्व्यतिरेकेऽग्रिमक्षणे कार्यव्यतिरेकः अनन्यथासिद्धयत्सत्त्वेऽग्रिमक्षणे यत्सत्त्वं

---

यस्यासत्त्वमित्यत्र च सतिसप्तम्याः सामानाधिकरण्यमर्थः व्यापकत्वं वा नाद्यः अतिप्रसङ्गात् सामग्रीक्षणे उदासीनसत्त्वेऽपि कार्यसत्त्वात् यत्किंचित्कारणाभावस्थले उदासीनाभावादपि कार्याभावात् नान्त्यः विघ्नप्रागभावादेर्मङ्गलाजन्यत्वापत्तेः तद्व्यतिरेकेऽपि तस्यानादित्वेन पूर्वक्षणे सत्त्वादिति चेदत्राहुः यद-

सत्त्वं गौरवात्। अस्ति च विघ्नकारणनाशे सति विघ्नप्रागभावस्य तथात्वम्। तावति समये दुरितानुत्पादश्च न साक्षान्मङ्गलजन्य इत्यदृष्टद्वारा तथा। एवं निर्विघ्नं समाप्यतामिति कामनया तदाचारोऽपि मङ्गच्छते। अत एव यत्र विघ्नाभावः स्वतः सिद्धः तत्र मङ्गलस्याकिञ्चित्करत्वेन वेदाप्रामाण्यमिति निरस्तम्।

प्रगल्भी।

तज्जन्यमित्यर्थः। नच प्रागभावकारणाप्रसिद्धिरितिवाच्यम्। येन रूपेण साध्यता तदवच्छिन्नाधिकरणकालोपाधिपूर्वसमयनियतवर्त्तिनोऽनन्यथासिद्धस्य कारणपदेनाभिधानात। नचेश्वरज्ञानाकाशादिसाध्ये तषां कारणत्वं न स्यादिति वाच्यम्। अत्र तेषां कारणत्वेनालक्ष्यत्वात। सम्बन्धिविशेषेण तेषामन्वयव्यतिरेकसत्त्वाद्वा। अतो योगक्षेमसाधारणमिदमिति दिक्। स्वमते उपोद्घलकान्तरमाह— एवं निर्विघ्नमिति। संसर्गाभावमात्रं निःशब्दार्थो न तु ध्वंस एवेत्यर्थः। प्रमत्ताद्यनुष्ठितसमाप्तौ किं कारणमिति विशिष्य जिज्ञासायामाह—सर्व इति। अन्यदा कृतस्य न मङ्गलत्वमिति हृदयम्। तथाचेति। विकल्पे चागममूलतया व्यभिचारो न दोषायेति

---

धीनो यस्य समयसंबन्धः यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकस्तज्जन्यमित्यर्थेनादोषादिति। **गौरवादिति**। यस्मिन्सत्यग्रिमक्षणे यस्योत्पत्तिरित्येवं जन्यत्वस्वीकारे उत्पत्तिघटितत्वेन गौरवं स्यादिति भावः। विघ्नकारणं—मङ्गलप्रागभावः तद्ध्वंसो मङ्गलं तस्मिन्सतीत्यर्थः। **तथात्वं**-सत्त्वम्। **न साक्षादिति**। मङ्गलस्याशुतरविनाशित्वान्न साक्षाद्विघ्नप्रागभावजनकत्वमिति भावः। **तावति समये,**

अनागतविघ्नाभावस्य तत्रापि साध्यत्वात्। सर्वे विघ्नाः-शमं यान्तीति यत्र विनायकस्तवपाठादौ श्रुतमस्ति तत्र तत एव प्रमत्तानुष्ठितसमाप्तेः अनादौ संसारेऽवश्यं तदाचारात्। तथाच तेन समं मङ्गलस्य विकल्प एव। यत्र च साङ्गे मङ्गले सत्यपि न फलं तत्र विघ्नभूयस्त्वादिति।

तन्न-विघ्नानुत्पादस्य व्यापारत्वे मानाभावात् संसर्गाभावत्वेन हेतुत्वात् तथैव व्यापारत्वम्। तच्च प्रागभावेप्यस्तीति चेत्। न। अत्यन्ताभावस्यापि व्यापारत्वापत्तेः। स्वतः सिद्धस्य न हेतुत्वं यदि तदा प्रागभावेपि तुल्यम्।

प्रगल्भी।

भावः। अन्वयव्यभिचारं निरस्यति-यत्र चेति। भूयस्त्वादिति। बहुतरविघ्नवत्समाप्तौ बहुमङ्गलस्य हेतुता। अतस्तत्कारणतावच्छेदकावच्छिन्नमङ्गलाभावात् नान्वयव्यभिचारो दोष इति भाव्यम्। गूढाभिसन्धिराह-विघ्नेति। अभिप्रायमविद्वानाह-संसर्गेति। तथैवेति। न तु ध्वंसत्वेन तस्यानुपस्थितत्वादिति भावः। अभिसन्धिमुद्घाटयति-अत्यन्ताभावस्येति। कादाचित्कसंसर्गाभावत्वं कार्यतावच्छेदकमस्तु अत आह-स्वतःसिद्धेति। यथा अत्यन्ताभावो हि स्वतः सिद्धो हेतुः तथा विघ्नप्रागभावोऽस्तु किमस्य द्वारत्वेनेति भावः। ननु उक्तयुक्तेर्विघ्नप्रागभावस्य द्वारत्वं

---

आरम्भानन्तरं यावता कालेन समाप्तिः। ननु विघ्नध्वंस एव व्यापारोऽस्तु किमजन्यस्य विघ्नप्रागभावस्य व्यापारत्वकल्पनेनेत्यत आह-**अत एवेति**। **विकल्प एवेति**। मङ्गलनाश्यतावच्छेदकवैजात्याक्रान्तविघ्नस्थलीयसमाप्तिं

किञ्च यत्र मङ्गलं न तत्र नियमेन विघ्नकारणमस्ति, येन तन्नाशद्वारा प्रागभावस्य साध्यत्वम् । एवमपि यत्र विघ्नानुत्पादोपि स्वतः सिद्धस्तत्र मङ्गलमकिञ्चित्करमेव, विघ्नध्वंसानुत्पादयोराब्धनिर्वाहकालवस्थायिनोर्मङ्गला-देवोत्पत्तेर्न तदर्थमदृष्टद्वारता । मङ्गलस्य विकल्पेनान्वये शिष्टैर्नियमतो मङ्गलानुष्ठानं न स्यादित्युक्तम् । किञ्च प्रधानत्वे साङ्गमङ्गलमात्रं न समाप्तिहेतुः तस्मिन् सत्यपि तदभावात् । प्रचितं तथेति चेत् । न । अप्रचितादपि फल-

प्रगल्भी ।

साधितमत आह—किञ्चेति । यत्र समाप्तिपर्यन्तं न विघ्नकारणोदयः तदभिप्रायकमिदम् । ननु यत्रास्ति भावि वा मध्ये विघ्नकारणं तत्रा-दृष्टद्वारा तन्नाशद्वारा मङ्गलं सप्रयोजनं भवतु अत आह—एवमिति । तथा च मङ्गलेन विघ्ननाशे जनिते मङ्गलकालीनविघ्नकारणनाशे च जनिते मङ्गलोत्तरकालीनं वा विघ्नकारणं समाप्तिपर्यन्तं यत्र नास्ति तत्र विघ्नप्रागभावस्यादृष्टं विनापि सत्त्वेन नादृष्टद्वारा मङ्गलसाध्यतेत्यर्थः । तथा चादृष्टद्वारा तत्र मङ्गलं न किञ्चित्कर मिति भावः । एवं स्वतः सिद्ध इति मूलग्रन्थस्य मङ्गलजन्यादृष्टं विना विद्यमान इत्यर्थो द्रष्टव्यः । किञ्च प्रधानत्वे इति । ननु साङ्गत्वमेव तत्र नास्तीति चेन्न अत्यन्ताव्यवहितेनाधिकारिणा कर्म-द्वयसमाप्त्युद्देशेन मङ्गलकरणेन एकस्य समाप्तावपि अन्यस्यासमाप्ति-

प्रति मङ्गलजन्यापूर्वं हेतुः तदङ्गस्थले्यतरसमाप्तिं प्रति च विनायकस्तवपाठा-दिजन्यमपूर्वं हेतुरिति भावः । **प्रधानत्वे**—अपूर्वद्वारा समाप्तिरूपप्रधान-फलजनकत्वे, **तस्मिन्सत्यपीति**-एकमङ्गले कृतेऽपि, **तदभावात्**—समाप्त्य-

सत्त्वात् । नोभयम् अननुगमात् । गुरुकर्मारम्भे प्रचितमल्पकर्मारम्भेऽल्पमिति चेत् । न । क्वचित्तादृशादपि फलासत्त्वात् वैपरीत्येऽपि फलसत्त्वाच्च । एतेन बहुविघ्नशङ्कया बहुतरमल्पविघ्नशङ्कया अल्पतरं च हेतुः तादृशाचारेण तादृशश्रुत्युन्नयनादिति निरस्तम् । तादृशादपि प्रारिप्सितासमाप्तेः वैपरीत्येऽपि समाप्तेश्च बहुत्वस्य त्रिचतुरादिभावेन अल्पत्वस्य चैकद्व्यादिरूपतया अननुगमेन तादृशशिष्टाचारेण तादृशश्रुत्या बोधयितुमशक्यत्वाच्च तस्मान्मङ्गलं नाङ्गं न वा प्रधानमिति पूर्वपक्षसंक्षेपः ॥

प्रगल्भी ।

विघ्नभूयस्त्वनिबन्धनत्वात् नत्वसाङ्गत्वनिबन्धनादिति भावः । **गुर्वारम्भ इति** । तथा च गुर्वारम्भविषयकर्मसमाप्तिं प्रति गुरु मङ्गलं हेतुः अल्पारम्भविषयकर्मसमाप्तिं प्रत्यल्पमिति वैजात्यान्न व्यभिचार इति भावः । **बहुत्वस्येति** । यद्यप्येकत्वाद्रित्वभिन्नसंख्यात्वरूपं बहुत्वमनुगतं तथापि तस्मिन् साङ्गे कृतेऽपि क्वचित्फलाभावादन्वयव्यभिचार एवेति भावः । नचान्वयव्यभिचारस्यमङ्गलभिन्नस्थले दोषत्वमास्थेयमिति वाच्यम् सामान्यतः साङ्गप्रधानवैदिककर्मणः फलावश्यम्भावे विधेस्तात्पर्यात् । तर्हि किमेतन्मङ्गलमप्रामाणिकमेवात आह–**पूर्वपक्ष इति** । तदुक्तम् "उभयव्यभिचारित्वं स्वतः सिद्धौ निरर्थता । नारम्भो द्वारसंदेहे मङ्गले दोषसंग्रह" इति ।

---

भावात् । **प्रचितं**–बहुतरम्, **उभयं**–प्रचितमचितं च । **वैपरीत्येऽपि**–प्रचितादप्यल्पतरकर्मसमाप्तेरप्रचितादपि गुरुतरकर्मसमाप्तेश्चेत्यर्थः ।

आलोकः ।

**यस्मिन् सतीति** । यदा यदवच्छिन्ने सति यदधिकरणक्षणोत्तरक्षणे यदधिकरणत्वं तदवच्छिन्नानधिकरणक्षणोत्तरक्षणे तदवच्छिन्नानधिकरणत्वं तदा तदेव तदवच्छिन्नस्य तदवच्छिन्नजन्यत्वमित्यर्थः । अस्ति च दण्डेतरयावद्धटहेतुसमवधानकाले

आलोकदर्पणः ।

यदा यदवच्छिन्ने सतीति । यस्यामवस्थायां यासु यावतीषु व्यक्तिषु सतीष्विति यावत् । यज्जातीयाधिकरणक्षणोत्तरक्षणे यज्जातीयाधिकरणत्वं तस्यामवस्थायां तासु तावतीषु व्यक्तिषु सतीष्विति यावत् । तज्जातीयानधिकरणक्षणोत्तरक्षणे तज्जातीयानधिकरणत्वं तज्जातीयजन्यत्वं तज्जातीयस्येत्यर्थः । अत्रान्वयव्यतिरेकमात्रोक्तौ रासभजन्यतापि घटे स्यादित्येकस्यामवस्थायामन्वयव्यतिरेकानुक्तौ तदपि यथाश्रुतमनुपपन्नं वेमाभावाद्युदासीनावस्थामेकामादाय रासभे उभयसत्त्वादतो यासु यावतीष्वित्युक्तम् । अत्र चासम्भववारणाय स्वस्वव्याप्यातिरिक्तास्विति विशेषणं देयम् । अन्यथा यस्यामवस्थायां दण्डादिव्यक्तिषु सतीषु दण्डानन्तरं घटस्य सत्त्वं तस्यामवस्थायां दण्डानधिकरणक्षणोत्तरक्षणे घटासत्त्वमप्रसिद्धं स्यात् । वस्तुतो नेदं विशेषणं देयम् आकाशादिजन्यशब्दादिसङ्ग्रहाय व्यतिरेकभागस्यापादनरूपत्वात् । अधिकरणत्वानधिकरणत्वे च स्वस्वव्यापारान्यतरस्य विवक्षिते अतो न यागादिजन्यस्वर्गाव्याप्तिरिति । यदवच्छिन्ने—यज्जातीये, सति—विद्यमाने । यदधिकरणेति

आलोककण्टकोद्धारः ।

यदेति—सत्त्वासत्त्वयोरुभयोरन्वेति । तेन स्वस्वव्याप्येतरसकलहेतुसमवधानक्षणे यत्सत्त्वे अग्रिमक्षणे यदधिकरणत्वं तादृशक्षण एव यदसत्त्वे अग्रिमक्षणे यदनधिकरणत्वमित्यर्थः । यद-

आलोकः ।

दण्डजातीयाधिकरणक्षणोत्तरक्षणे घटजातीयाधिकरणत्वं तदन धिकरणक्षणोत्तरक्षणे च घटजातीयानधिकरणत्वं तद्वदेव यावद्विघ्न-हेतुसमवधाने मङ्गलत्वावच्छिन्नाधिकरणक्षणोत्तरक्षणे विघ्नप्रागभा-वत्वावच्छिन्नाधिकरणत्वं तदनधिकरणक्षणोत्तरक्षणे तत्प्रागभावत्वा-

आलोकदर्पणः ।

यत्पदं तदेव तज्जन्यत्वमित्यनेन सम्बध्यते । अधिकरणं चार्थाद्यज्जा-तीयाधिकरणमेवेतिनोक्तेऽर्थे अक्षरविरोधः । यद्वा यदवच्छिन्नाधिकरणे-त्यादिपाठस्तु स्पष्ट एव । अत्र चावस्थैक्यं तत्क्षणैक्यमपि विवक्षितम् तेन यस्यामवस्थायां यदधिकरणयत्क्षणोत्तरयत्क्षणे यदधिकरणत्वं तस्यामवस्थायां तदनधिकरणतत्क्षणोत्तरतत्क्षणे तदनधिकरणत्वं

आलोककण्टकोद्धारः ।

वच्छिन्ने सति यदवच्छिन्नाधिकरणेत्यनयोरुक्तिवैचित्र्यमात्रेण भेदो-पन्यासः । ननु स्वेतरपदेन जन्यत्वाभिमतहेतुरेव वाच्योऽन्यथा असं-भवात्, तथा च विघ्नहेतोरघटकत्वात् प्रागभावहेत्वप्रसिद्धौ कथ-मेतत्—अत्राहुः जन्यत्वाभिमतनिरूपितप्रतियोग्यनुयोगिभावनिरूप-कप्रागभावनाशकपरं हेतुपदम्, तादृशश्च घटादिस्थले तद्धेतुरेव प्रागभावस्थले तत्प्रतियोगिहेतुः तयोरेव प्रागभावनाशकत्वादिति । वस्तुतस्तु यत्किंचिदेककार्यनिरूपितयावद्धेतुपरं हेतुपदम् अनतिप्रस-ङ्गान्नतु संकोच्यमिति मम प्रतिभाति । यद्यपि इदं नित्यजन्ये नास्ति क्षणे तदनधिकरणत्वस्याप्रसिद्धेः तथापि प्रवृत्त्यौपयिकमिदं पारिभा-षिकं जन्यत्वम् न च नित्यं प्रवृत्तिविषय इति न दोष इति वदन्ति । ननु दण्डस्य घटहेतुत्वेन युक्तं तदनधिकरणक्षणोत्तरक्षणे घटानधि-करणत्वं मङ्गलसत्त्वेवं तु विघ्नप्रागभावाधिकरणत्वं कथं विघ्नकारणा-विघटनात्, यदाह— मूले विघ्नकारणविनाशद्वारेति । न च विघ्नोत्र-

आलोकः।

वच्छिन्नानधिकरणत्वम्। तथा चोभयत्र भेदाभावात्तज्जन्यत्वमविशिष्टम्। एतच्च यद्यन्यथासिद्धमाधारणं तदा तदन्यत्वेनापि विशेषणीयम्। एतेन यथाश्रुतेऽसत्त्वस्य प्रागभावाऽत्यन्ताभावविकल्पेन प्रकृताव्याप्त्याकाशादावतिव्याप्तिप्रसङ्गः मङ्गलपूर्वमपि प्रागभावसत्त्वे व्यभिचार इत्यादिदूषणमलग्नकमिति दिक्।

आलोकदर्पणः।

ध्येयम्। तेन दण्डादिस्थले दण्डाधिकरणाव्यवहितोत्तरक्षणग्रहणात् प्रकृते च मङ्गलाधिकरणक्षणावधिकतृतीयक्षणग्रहणाद् वैधर्म्यं न देयम्। नन्वेवं दण्डरूपजन्यतापि घटे स्यादित्यत आह—एतच्चेति।

आलोककण्टकोद्धारः।

घ्नसामग्री तदनुत्पादश्च सामग्र्येव दुरितनाशद्वाराजन्या व्यापार इति वाच्यम्। तथा सति दुरितध्वंसस्यापि सामग्रीघटकत्वेन पृथक् तद्द्वारताभिधानानुपपत्तेः, न च विघ्नहेत्वदृष्टमेव तेन नाश्यते तन्नाशक्षण एव विघ्नोत्पत्त्यापत्त्यान्वयभागस्यासिद्धतापत्तेः। विघ्नसामग्र्यसम्पत्तिदशायां प्रागभावस्यासाध्यत्वात्, तत्सम्पन्नावदृष्टनाशस्याकिंचित्करत्वाच्च तस्य साक्षाद्धेतुत्वादिति। मैवम्—अन्वयव्यतिरेकाभ्यां निर्विघ्नकामनामूलकध्वंस्यगतप्रागभावजन्यत्वानुरोधाच्च मङ्गलाभावस्य विघ्नहेतुत्वमित्याशयात्। एवं स्वाभावेतरत्वमपि नाशकविशेषणमतो न मङ्गलसत्त्वे यथोक्तसकलसम्पत्त्यसंभवः। न च मङ्गलाभावो दुरितजनने निषिद्धक्रियया अन्यथासिद्धः अलौकिककार्यं श्रौतनानाकारणमध्य एकेनापरान्यथासिद्धत्वं वक्तुमशक्तेः, कलञ्जकारणादेवेति नियमानवधारणात्। अत एव मणिध्वंसस्य दाहकारणत्वं मानसिद्धमिति तद्विघटनेनैव मणिर्दाहानुत्पादहेतुरिति कश्चित्। तन्न यत्र मङ्गलं न तत्र नियमे नेत्यग्निमाकरालग्नकतापत्तेः। वस्तुतो

आलोककण्टकोद्धारः ।

उद्धृष्टद्वारकताभ्युपगमाद्भाविविघ्नहेतुनाशकतया तथात्वमिति द्रष्टव्यम्। अत एवैवं सति भाविविघ्नहेतुनापि प्रतिबन्धो न स्यादित्याशयेन विघ्नध्वंसानुत्पादयोरिति मूलम् । यद्वा विघ्नो न दुरितं किंतु तत्कार्यं राजावरोधादि तदनुत्पादश्च दुरितनाशद्वारा साध्य इत्यर्थः । इदं त्ववधेयं सर्वमिदमापत्तिपरं न वास्तवसत्तापरं नरकप्रागभावस्य प्रायश्चित्तजन्यतानुपपत्तेः प्रायश्चित्तसत्ताक्षणे नरकसामग्र्यभावात् तत्सामग्रीकाले च प्रायश्चित्तविनाशात्, नच तत्तद्व्यापारान्यतरसत्त्व विवक्षितंतथा च पापध्वंससत्त्वान्न दोषः, पापनाशे नरकसामग्र्यसम्पत्तेः, अत्र तत्तद्व्याप्येतरस्य पापस्यैवाभावात्, तस्माद् यथा यदि दण्ड इदानीं न स्यात् अनन्तरक्षणे घटो न स्यादिति ज्ञानं दण्डे घटार्थिप्रवर्तकं तथा यदि प्रायश्चित्तं न क्रियेतावश्यं दुःखं स्यादिति ज्ञानं प्रायश्चित्ते प्रवर्तकमित्येव तात्पर्यम् । अत एव न नित्याऽव्याप्तिः उक्तापत्तेस्तत्रापि संभवात् अत्र च यत्सत्त्व इत्यन्वयांशो व्यर्थ इति चिन्त्यम । तदा तदन्यत्वेनापीति । यद्यपि जनकजनकेऽपि प्रवृत्तेर्न तद्व्यावृत्तेः फलं तथापि तद्व्यावर्तकातिरिक्तान्यथासिद्धिचतुष्टयाभाव तात्पर्य रूपादावप्रवृत्तेः। न च प्रकृतकार्यनिरूपितान्यथासिद्ध्यभावो वाच्यः अन्यथातिप्रसङ्गात् तथा चाप्रसिद्धिः प्रागभावनिरूपितान्यथासिद्ध्यप्रसिद्धेः तासां पूर्वत्वघटितत्वादिति वाच्यम् कारणत्वाभिमतनिष्ठान्यथासिद्ध्यनिरूपकत्वस्य कार्यत्वाभिमतविशेषणत्वादिति न किंचिदेतत्। एवमपीतिमूलम्। एवं चेत्यर्थः। अन्यथा पौनरुक्त्यापत्तेरितिध्येयम्। बहुत्वस्येति मूलम्। यद्यपि बहुत्वत्वं जातिरनुगतैव तथाप्येवं हेतुत्वे सर्वत्र मङ्गलत्रयेणैव सम्पत्तेश्चतुर्थाद्यनुष्ठानं क्वापि न स्यादिति भावः । विघ्नसमसंख्येति । मङ्गलसमकालत्वं विघ्नविशेषणम् । यद्यप्येकविघ्नस्यैकमङ्गलेन विनाशे तत्कालीनविघ्नान्तरस्याग्रे प्रकारान्तरेण नाशे तदुत्तरसमाप्तौ तन्मङ्गलस्य हेतुत्वे बाधकं

आलोकः ।

**एवं निर्विघ्नमिति** । निरः संसर्गाभावमात्रवचनत्वादित्यर्थः । **नोभयमिति** । यद्यपि विघ्नसमसंख्यमङ्गलत्वेनानुगमे नाननुगमो न वा व्यभिचारस्तथापि एकेनाप्यनेकोत्पादादत्रैतत्प्रकारो न घटते कारणतावच्छेदकस्यापरिचयेनाप्रवृत्तेश्चेत्येवमयम । यद्वा तथाप्ययं तदापि तदा यदि समाप्तिहेतुता सैव च नोक्तयुक्तेरिति भावः । **नागृहीतेति** यद्यप्ययं लाघवमूलको न्यायः इह तु विशेष्य बाधो मूलमिति सविशेषणे हीति वक्तुमुचितम्, अत एव त्रिसूत्रीप्रकाशादौ तथैव लिखितम् तथापि विघ्नाभावस्य विशेषणतोपलक्षणताविकल्पेन समाप्तिमात्रे बाधो विशिष्टायां लाघवमिति विषयभेदेनोभयसामञ्जस्यमिति भावः । इह विघ्नो मे माभूदित्यत्रेदमंशस्यापि विशेषणत्वात् न्यायसाम्यमिति तु दर्पणदूषणमसंभवि इदन्त्वस्य प्रतियोगिनि विघ्ने विशेषणत्वन्नतु तदभावे । न च विशेषणविशेषणतयापि

आलोकदर्पणः ।

**नोभयमितीति** । किञ्चेतीति क्वचित्पाठस्तत्र किञ्च प्रधानत्व इति

आलोककण्टकोद्धारः ।

नास्तीत्युक्तं तथा च तत्र व्यभिचारः तथाप्ययमन्यत्र दोषो द्रष्टव्यः । नन्वभिमतविघ्नसमानकालतद्विघ्ननाशसमर्थमङ्गलत्वमेव हेतुतावच्छेदकमस्तु तत्संवलनं तु दण्डसंवलनवदुपपद्यते । द्वितीयादिप्रवृत्तिश्च द्वितीयादिविघ्ननाशाशया विघ्ननाशे पृथक्कारणत्वात्, न चान्वयव्यभिचारे साक्षादित्यादिविरोधः प्रतिबन्धकसत्त्वे साक्षित्वाभावात्, वस्तुतस्तत्र फलपदं तद्धेतुव्यापारपरमतो न दोषः, विघ्नध्वंसस्य तत्राप्युत्पत्तेः अन्यथा फलप्रागभावशून्यकृतकर्मदुःखप्रागभावशून्यकृतप्रायश्चित्ताभ्यां व्यभिचारस्य यत्रालेपतापत्तेः,

आलोकः ।

न्यायसाम्यमिति वाच्यम् । व्यभिचारेण विनिगमनासंभवादिति भावः । वयं तु ब्रूमः । विघ्नध्वंसोपि न फलमपि तु विघ्नानुत्पादः विघ्नो माभूदिति उद्दिश्य प्रवृत्तेः न तु विघ्नो निवर्ततामिति । अत एव दुःखं माभूदिति कामनया क्रियमाणस्य प्रायश्चित्तस्य दुःखानुत्पाद एव फलं नतु दुःखसाधनध्वंसः । अत एव च कृतेपि मङ्गले समाप्त्यभावः । तदा प्रतिबन्धकाधर्मध्वंसद्वारा प्रतिबन्धानुत्पादेऽप्यग्रेतनदुरितेन प्रतिबन्धसंभवात् । यथा च दुःखानुत्पादानुगुणतया पापनाशकत्व प्रायश्चित्तस्य तथा दुरितनिवर्तकत्वं मङ्गलस्य । तावत्समयमनवस्थितया यदि तदर्थमदृष्टद्वारकतापि कल्प्या कल्प्यताम् । वस्तुतो मध्येपि मङ्गलाचरणेन मङ्गलानन्तरमपि प्रतिबन्धदर्शनेनापूर्वजनने मानाभावः । न च तदा

आलोककण्टकोद्धारः ।

वक्ष्यमाणसामग्रीफलत्वपक्षेपि संबलनादेरेवमेव समाधेयत्वात्, अन्यथा तत्पक्षेप्येवमादिदोषापत्तेरित्यस्वरसादाह- यद्वा तदपीति । विशेषणतोपलक्षणतेति । कामनायामिति शेषः । अत्र विशेषणमात्रे कल्पनीयकल्पनोपपत्तौ तत्कल्पनाप्रवृत्तं प्रमाणं विशेषणमात्र एव तत्कल्पयति न विशिष्टे चरमोपस्थितत्वात् गुरुत्वाच्चेत्येव प्रकृतन्याये मूलम् । न चेदमत्र संभवति केवलध्वंसस्य व्यभिचारेण मङ्गलफलत्वासंभवात्, अत एव न शुद्धसमाप्तेस्तदित्यव्यभिचारात्, काम्यत्वाद्विशेषणत्यागे बीजाभावाच्च विशिष्टमेव फलमित्युपाध्यायाः । तच्चिन्त्यं विशिष्टत्वस्यार्थसिद्धत्वेन कार्यतानवच्छेदकत्वात्, पूर्वोक्तान्यथासिद्धेः प्रायश्चित्तजन्यविघ्नध्वंसपूर्वकसमाप्तौ व्यभिचाराच्च ध्वंसविशेषस्यावच्छेदकत्वे च तत्र प्रकृतन्यायानवकाशाच्चेति ।

आलोकः ।

दुरितहेतुक्रियाया एवासंभावितत्वेन कथं तदनुत्पादाय प्रवृत्तिरिति वाच्यम् । विघ्नो मा भूदिति कामनायां हि विघ्नो न दुरितमपि तु प्रतिबन्धः स च विसामग्री तदनुत्पादः सामग्रीसंपादनमेव । तस्यां सत्यां कार्याभावस्य ब्रह्मणापि दुरुपपादत्वात् । नचैवं बहुमङ्गलाचरणं किमर्थमिति वाच्यम्, विघ्नस्य प्रत्येकमङ्गलविरोधितयोभयसमाधेयत्वात् । इयान्परं भेदः । तत्र विघ्नाभाव एव फलं मम तु कामनानुरोधात् तद्द्वारकोऽन्यः । न च सामग्र्याः फलत्वे समाप्तिवद् व्यभिचारः । तत्रापि विनायकस्तवपाठादिना विघ्ननाशेन व्यभिचारात् । विशेषे तद्धेतुत्वं यदि तदा समाप्त्यविलम्बस्वरूपविशेषे मङ्गलस्य हेतुत्वादिति ।

आलोकदर्पणः ।

प्रकरणं धृतमिति ध्येयम् । तत्र विघ्नाभाव एवेति । दुरितध्वंस एवेत्यर्थः । तद्द्वारकोऽन्य इति । दुरितध्वंसद्वारा सामग्रीसम्पत्तिरित्यर्थः । समाप्त्यविलम्बेति । यद्यप्येवमप्यविलम्बितसमाप्तावेव हेतुत्वं मङ्गल-

आलोककण्टकोद्धारः ।

वदन्त्विति । अत्रैवं सति विघ्ननिश्चये प्रागभावाभावनिश्चयेन फलव्यतिरेकनिश्चयान्न प्रवर्त्तेत दूषणं कियद्दूष्यानवबोधविलसितमिति न विद्मः । ननु विसामग्र्यनुत्पादो न फलमकाम्यत्वादत आह-तस्यामिति । तथा च फलाभावप्रयोजकाभावत्वात्काम्यत्वमिति भावः । नचैवमिति । एकस्यैव साङ्गस्य फलसाधनत्वादिति भावः । अविलम्बस्वरूपेति । मङ्गलसमकालतत्समसंख्यविघ्ननाशस्थलीयैहिकसामग्र्यामित्यर्थः । न चात्रापि नित्यानित्यघटितकारणचक्रात्मिका सामग्री न फलमिति विवक्षितविवेकेन दुरितनाश एव फलमायाति यतः कामनाविषयकालीनमङ्गलानन्तरोत्पत्तिकयावत्कारणसमुदायः फलं विघ्नध्वंसो द्वारं कामनाबलेनैव लौकिकम-

आलोकदर्पणः ।

स्यास्तु तथापि कामनानुरोधादेतदुदाहृतम् । किञ्च मङ्गलजन्यो विघ्नध्वंसो न साक्षात्समाप्तिं जनयति दृष्टसम्पत्तौ दुरितकृतसमाप्तिविलम्बादर्शनादिति सामग्रीसम्पादनमुखेन समाप्तिहेतुत्वे वाच्ये सामग्र्येव लाघवात्फलमिति भावः । समाप्तिपक्षोक्ताश्च दोषा इहापि ध्येयाः । केचित्तु विघ्नकादाचित्काभावत्वेन रूपेण दुरितप्रागभावध्वंसयोरुभयोरपि फलत्वम् अतो विघ्नो निवर्त्ततामिति कदाचित् कदाचिद्विघ्नो मा भूदिति च कामनोपपद्यत इत्याहुः ।

आलोककण्टकोद्धारः ।

चीपत्रादिकारणविशेषेपि मङ्गलविघ्नध्वंसयोः कारणत्वकल्पनं नागृहीतेति न्यायात् समाप्तिरेव फलमित्यप्यत एव नेत्याशयः । अत्र च कामनानुरोधात् ध्वंससमाप्तिविशेषयोरपि पृथगेव फलत्वमित्यधिकारभेद एवान्यथा एकैककामनाकृतमङ्गलानामनधिकृतकर्तृकत्वेनाफलत्वापत्तेः । न च विघ्नाभावनिश्चये तदनाचरणात् विघ्नध्वंसकामना सार्वत्रिकी तत्रापि विघ्नानुत्पादकामनयाचरणात् । नचैवमपि स्वर्गत्वमिव विघ्नाभावत्वमेवेति प्रसक्तमप्यधिकारिविशेषणकामनाविषयतावच्छेदकमस्तु सार्वत्रिकत्वादिति वाच्यम्, सामग्र्यनुत्पादकामनास्थले दुरिताभावकामनाभावात् । न चान्यथासिद्धिः श्रुतिमूलकाचारमूलकानुमानाद्धेतुतासिद्धौ तदभावात्, अवश्यकल्प्यत्वाद्यन्यथासिद्धावश्यकल्प्यमितिविशेषणात्, अन्यथा चरमेण हेतुनाऽचरमान्यथासिद्धेः तस्य च पूर्वं संदेहान्नानुमानादिप्रवृत्तिविरोध इत्याशयः प्रतिभाति । एक आह—विघ्नो निवर्ततां विघ्नो माभूत्, निर्विघ्नं समाप्यतामिति कामनाभिरनियमेन शिष्टानां प्रवृत्तिर्दृश्यते । तत्रानियतफलत्वे कर्मभेदापत्त्या गौरवेण चैकस्यैव फलत्वे विशेषणत्वादिन्यायेन द्वारत्वादिनावश्यकत्वेन च विघ्नाभाव एव फलम् अन्यथा निश्चिततद्व्यतिरेकस्यापि कदाचित् तत्करणापत्तेः, अन्यथासिद्धस्तु समाप्तिवदेवानुत्पाद इति ।

सिद्धान्तस्तु आरब्धकर्म्मसमाप्तौ मङ्गलं नाङ्गं न वा प्रधानमहेतुत्वात्। किन्तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंसः फलम्। आरब्धकर्म्मनिर्व्वाहे विघ्नो-माभूदिति कामनया तदनुष्ठानात् विघ्नसंशये निश्चये वा शिष्टानां तदाचरणाद्विघ्नाभावस्याकाङ्क्षितत्वाच्च। यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणं

प्रगल्भी।

विघ्नध्वंस इति। एतन्मते विघ्नध्वंसकामनाया अधिकारत्वं बोध्यम्। आरब्धकर्मनिर्वाह इति। अत्र वदन्ति। अत्रेदं चिन्त्यम्—आरब्धनिर्वाहविशेषितस्य तदनुकूलविघ्नध्वंसस्य प्रकृतकामनाविषयत्वात्। न केवलस्यैव तस्य फलत्वमुक्तं किन्तु तद्विशिष्टस्यैव विशेषणत्यागे बीजाभावात्। केवलस्य तस्य गङ्गास्नानादितोऽपि भावेन मङ्गलस्य व्यभिचारित्वाच्चेति तच्चिन्त्यम्। तस्य विशेषणतया हि फलत्वे वाच्ये व्यतिरेकादि-व्यभिचारस्य बाधकस्योक्तत्वाद् विघ्नध्वंसस्यैव फलत्वात्। नचोक्तव्यभिचारः विघ्नध्वंसविशेषे कारणत्वे तात्पर्यात्। तैरपि आरब्धनिर्वाहविशेषितविघ्नध्वंसविशेषे एव मङ्गलकारणत्वस्य वक्त-

---

आरब्धकर्मसमाप्तौ—आरब्धकर्मजन्यसमाप्तौ। नाङ्गं—नारब्धकर्म जन्यसमाप्तिजनकम्, न वा प्रधानं—आरब्धकर्माजन्यारब्धकर्मोत्पत्तिजनकम्, प्रधानम् आरब्धकर्माजन्यफलान्तरजनकम्। तदेव फलान्तरमाह—**विघ्नध्वंस इति**। तस्य फलत्वे मानमाह—**आरब्धेति**। निर्वाहः—समाप्तिः। समभ्यर्थः प्रतिबन्धकत्वं तस्य विघ्नेऽन्वयः।

तदापि नागृहीतविशिषणान्यायेनाहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव फलं न समाप्तिरुभयतो व्यभिचारात् । समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लोकावगतस्वकारणादेव । प्रचिताप्रचितदेवतास्तु-

प्रगल्भी ।

व्यत्वात् । अन्यथा तस्य गङ्गास्नानादिजन्यविघ्नध्वंसजन्यारब्ध-निर्वाहस्थलीयविघ्नध्वंसे व्यभिचारात् । तदापि नागृहीतेति । अत्र वदन्ति । अत्रेदं चिन्त्यम् । विशेषणमात्रे कल्पनीयकल्पनोपपत्तौ तत्कल्पनाप्रवृत्तं प्रमाणं प्रथमोपस्थिते विशेषणमात्र एव तत्कल्पयति नतु विशिष्टे विलम्बोपस्थितिकत्वात् गुरुत्वाच्च इत्येव हि नागृहीतविशेषणान्यायबीजम् नच प्रकृते तत्सम्भवति केवलस्य विघ्नध्वंसस्य मङ्गलव्यभिचारात् । तथा केवलायाः समाप्तेरपि तद्व्यभिचारात् तद्विशिष्टाया एव तस्यास्तदव्यभिचा-रात् प्रकृतकामनाविषयत्वाच्च फलत्वकल्पनं युक्तमिति । एवं च न समाप्तिरुभयतो व्यभिचारात् इत्यपि चिन्त्यम् । अन्वयव्यभिचारस्य प्रागेव निरस्तत्वात् । विघ्नध्वंसविशिष्टायास्तस्याः फलत्वोपगमेन व्यतिरेकव्यभिचारानवकाशाच्चेति । तत्र प्रथमं चिन्त्यं चिन्त्यते । नहि येन रूपेण शब्दादुपस्थितं विशेषणं तेन रूपेण व्यभिचारः शाब्दबोधप्रयोजकः किन्तु यदंशे व्यभिचारस्तदंशं

उभयतोव्यभिचारादिति । शरीरनिष्ठसंबन्धेनात्मनिष्ठसंबन्धेन च मङ्गलस्य समाप्तिं प्रति व्यतिरेकव्यभिचारादित्यर्थः । केचित्तु उभयत इत्यस्य अन्वयतो व्यतिरेकतश्चेत्यर्थमाहुः ।

त्यादिसाङ्गमङ्गलात् प्रत्येकं विघ्नध्वंसो भवत्येव । अतो वैदिके फलनिश्चयान्मङ्गले प्रवृत्तिः । न च वेदाप्रामाण्यम् ।

आलोककण्टकोद्धारः ।

प्रत्येकं विघ्नध्वंसो भवत्येवेतिमूलम् । नन्वेकजातीयनमस्कारादेरेकजातीयविघ्ननिवर्तकतया एकस्मिन् तज्जातीये कृते नाश्यजातीयसर्वविघ्नध्वंसो वा एकध्वंसोपि वा न स्यात्, नत्वेकध्वंसो विनिगमकाभावात्, तथा चैकजातीयनानामङ्गलानुष्ठानं शिष्टानामुपपन्नं नचैतदनुरोधात् तत्तद्व्यक्तित्वेन नाश्यनाशकभावः । कार्यकारणतावच्छेदकानिश्चयेऽनध्यवसायेनाप्रवृत्त्यापत्तेः, अत एव ब्रह्मवधादिप्रायश्चित्त एकजातीयनानापापसत्त्वे सर्वेषामेकेनैव कर्मणा नाशो विनिगमकाभावादिति तन्त्रतेर्यांत निबन्धारः, अत्रैकजातीयनानामङ्गलानुष्ठानं पूर्वपूर्वस्य वैगुण्यशङ्कया तथाचैकस्मादेव तन्नाश्यजातीयसर्वनाशेपि प्रत्येकमित्याकरस्य विजातीयविघ्नपरत्वमिति नव्याः । तन्न सावधानतया करणेपि पुनस्तत्करणादिति मेवं प्रायश्चित्ताद्यनाश्यविघ्नत्वावच्छिन्ने मङ्गलत्वेन तत्तज्जातीयनमस्कारत्वादिना वा नाशकत्वात्, तत्तद्व्यक्तित्वेन हेतुहेतुमद्भावेपि सामान्यकरणताज्ञानेन प्रवृत्त्युपपत्तेः एकेनैकनाशस्य वोधयितुं शक्यत्वाच्च, न हि विशेषकारणतावोधने श्रुतेरसामर्थ्यम् तथा चाचारमूलकश्रुत्यनुरोधादेव नात्र प्रायश्चित्तवत्तन्त्रतेति । यत्तु समाप्तिस्थलीयैकोनविघ्नसमसंख्यमङ्गलध्वंसावच्छिन्नमङ्गलत्वेन तावद्विघ्नविनाशकत्वाच्चरमस्यैव हेतुत्वं पूर्वेषां तु तदवच्छेदकसम्पादकत्वमिति न द्वितीयाद्याचारानुपपत्तिरिति, तन्न तत्र एकविघ्नस्थलीयैकमङ्गले तदभावादिति ।

प्रारिप्सितप्रतिबन्धकविघ्नध्वंसश्चेति मूलं प्रायश्चित्ताद्यनाश्यं बोध्यम् अत एव वक्ष्यत्यत एव दुरितनाशकमपि गङ्गास्नानादीत्यादि ।

**समाप्त्यभावश्च क्वचित् प्राचीनविघ्नभूयस्त्वात् क्वचिन्मङ्गलानन्तरोत्पन्नाविघ्नात् क्वचिल्लोकावगतकारणाभावात्। प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विना । न च प्राय-**

प्रगल्भी ।

विहायान्यत्र स्वार्थकारणतासंसर्गं बोधयति शब्दः । अन्यथा गङ्गास्नानादिजन्यविघ्नध्वंसजन्यसमाप्तेरपि निर्विघ्नसमाप्तित्वेनोपस्थितौ कथं तत्र मङ्गलकारणताबोधनमुक्तवेदेन स्यात् । यदि विघ्नध्वंसविशेषजन्यसमाप्तौ तथात्वं वाच्यं तदा नागृहीताविशेषणान्यायेन विघ्नध्वंसविशेषं प्रत्येव वेदेन मङ्गलकारणताबोधनमास्ताम् । यदपि द्वितीयं चिन्त्यं तदपि चिन्त्यते । पूर्वमन्वयव्यतिरेकव्यभिचारयोः स्थापितत्वात् । अन्यथासिद्धेर्व्यवस्थापितत्वाच्च । समाप्यतामिति कामना तु नास्त्येवेति बोध्यम् । ननु चैतावता सविशेषणे विधिनिषेधौ इतिन्यायादस्या भेदो न स्यादिति चेत् नागृहीतविशेषणान्यायस्य क्वचिद्बाधोपजीवकत्वेऽपि प्रकारभेदेन न्यायद्वयस्य न्याय्यत्वादिति बोध्यम् । ननु विघ्नध्वंसो मङ्गलव्यभिचारी कथं तत्फलं स्यादित्यत आह—**प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विनेति** । अत्र वदन्ति । अत्रेदं चिन्त्यम् । अत्र प्रारिप्सितेति विघ्नध्वंसविशेषणमुपलक्षणं वा । आद्ये प्रारिप्सितस्यापि फलत्वस्वीकारापत्तेः । अन्त्ये व्यभिचारतादवस्थ्यम् । कर्मारम्भकालीनगङ्गास्नानेनापि प्रारिप्सितोपलक्षितविघ्नध्वंसस्य

---

ननु यत्र प्रायश्चित्तादिना विघ्ननाशस्तत्र व्यतिरेकव्यभिचार इत्यत **आह प्रारिप्सितेति** । प्रारिप्सितविघ्नध्वंसश्च—मङ्गलनाश्यजातीयविघ्नध्वंसश्च।

श्चित्त्वेन शङ्कितविघ्नविनाशः । विघ्नसंशये तदनुपदेशात् । न च कामनोपाधिकर्त्तव्यत्वे नियतमनुष्ठानं न स्यादिति वाच्यम् । आरब्धकर्मकारणप्रतिबन्धकाभावोपायत्वेनावश्यं तदनुष्ठानात् । तेन विना प्रतिबन्धकाभावेऽसति कर्मानुत्पत्तेः । न च प्रधानत्वे नान्यदापि तत्करणम् नियतसमयशिष्टाचारानुमितश्रुत्या कर्मारम्भसमये तत्कर्त्तव्यत्वबोधनात् दर्शारम्भसमये आरम्भणीयावत् । विघ्नसंसर्गाभावश्च समाप्तिहेतुः । सच

प्रगल्भी ।

सम्भवात । वस्तुतस्तु तत्र तद्विशेषणमेव वाच्यं नतूपलक्षणम् । तत्त्वस्यैवौत्सर्गिकत्वेन तदसम्भव एव उपलक्षणत्वस्वीकारादिति । तच्चिन्त्यते । उपलक्षणत्वपक्षेऽपि हि तत्र न व्यभिचारः । गङ्गास्नानाद्यजन्ये प्रारिप्सितविघ्नध्वंसे मङ्गलस्य कारणत्वे तात्पर्यात् । यत्तु वस्तुतस्त्वित्यादि तदपि चिन्त्यते । प्रारिप्सितस्यविशेषणत्वेऽन्वयव्यभिचारादेर्बाधकस्य प्राग्व्यवस्थापितत्वात् । तदनुपदेशादिति । इदं तु शङ्कितविघ्नस्थलाभिप्रायकम् । यत्र तु प्रकारान्तरेण विघ्नं निश्चित्य गङ्गास्नापनादौ प्रवर्तते तत्र गङ्गास्नानादिहिरण्यदानादिना विघ्नध्वंसो भवत्येव । मङ्गलत्वं तु परं तस्य नास्ति विघ्नध्वंसकामनया वेदेनाबोधनात् ।

न स्यात् मङ्गलस्येति शेषः । नच प्रधानत्वे इति । न हीत्यर्थः । प्रधानत्वे विघ्नध्वंसमात्रजनकत्वे समाप्त्यजनकत्व इति यावत् । अन्यदा— कर्मानारम्भकाले । तत्कारणं फलजनकं स्यादिति शेषः ।

क्वचित् स्वतःसिद्धः क्वचिन्मङ्गलसाध्यः। अत एव मङ्गलं विनापि जन्मान्तरानुवर्त्तमानविघ्नात्यन्ताभावात् प्रमत्त-नास्तिकानुष्ठितसमाप्तिः। न चानध्यवसायः शङ्कितविघ्न-वारणार्थं प्रवृत्तिरतो यावद्विघ्नशङ्कं तदाचरणात्। अत एव तच्छङ्कया मध्येपि तदाचरन्ति गुर्वारम्भेपि बहु-विघ्नशङ्कया बहुमङ्गलाचरणम्। यथा च विघ्नसंशयेपि प्रवृत्तिस्तथोक्तमेव

स्यादेतत् मङ्गलमाचरेदितिविधौ किं मङ्गल-त्वं—न तावद्देवतास्तुत्यादित्वम् अननुगमात्, नापि

प्रगल्भी।

तद्भिन्नविघ्नध्वंस एव मङ्गलस्य कारणत्वमित्यवधेयम्। ननु ब्रह्महत्या-जन्यपातकस्यापि प्रारिप्सितकर्मप्रतिबन्धकत्वस्मरणेन विघ्नत्वात् तस्यापि मङ्गलनाश्यता स्यादिति चेत् न महापातकिनो मङ्गल-करणेऽनधिकारात्। अनधिकृतकर्तृकत्वेन मङ्गलस्यासाङ्गत्वेन तद्-ध्वंसाजननादिति भाव्यम्।

नापीति। विघ्नपदं प्रतिबन्धकदुरितपरं बोध्यम्। क्रिया कार्या साधयितुमारब्धेनियावत्। तेन न प्रतियोगिन्यदृष्टादौ

अनध्यवसाय इति। कियन्ति मङ्गलानि कर्तव्यानि कीदृशं वा मङ्गलं कर्तव्यमित्यत्र नियामकाभाव इत्यर्थः।

ननु मम मते गुरुतरकर्मसमाप्तौ बहुतरमङ्गलस्य हेतुत्वाद्बहुतरमङ्गला-नुष्ठानं तत्र तु नेत्यत आह-**गुर्वारम्भेति**। तथोक्तम्—तादृशाचारानुमितश्रुत्या तथैव बोधनादिति भावः।

प्रारिप्सितप्रतिबन्धकविघ्नोपशमहेतुक्रियात्वं विघ्नोत्सारणासाधारणकारणत्वं वा क्रियाविशेषस्य तदसाधारणकारणस्य वा स्तुत्यादेर्वेदाद्विशिष्यापरिचये

प्रगल्भी।

चातिप्रसङ्गः। प्रारिप्सितपदं कारीर्यामतिव्याप्तिवारणाय। ननु यत्र विघ्नं निश्चित्य गङ्गास्नानादिकं क्रियते तन्नाशार्थं तत्राव्याप्तिरित्यत आह–विघ्नोत्सारणेति। विघ्नत्वं च प्रारिप्सितप्रतिबन्धकदुरितत्वम्। नच वृष्टिरपि तदधिष्ठातृपुरुषप्रारिप्सिता भवतीति प्रारिप्सितवृष्टिप्रतिबन्धकदुरितरूपावग्रहनिवृत्त्यसाधारणकारणे

आलोककण्टकोद्धारः।

**प्रारिप्सितप्रतिबन्धकेति मूलम्।** अत्र कारीरीप्रसारकक्रिये वारयितुं प्रारिप्सितविघ्नपदे कालादिवारणाय क्रियापदं तदुपशमार्थितया क्रियमाणपरम्, अतोविघ्नस्यापि व्यावृत्तिः। प्रायश्चित्तादिवारणाय तदन्यत्वमपि देयं। **विघ्नोत्सारणेति मूलम्।** अत्रापि प्रारिप्सितप्रतिबन्धकेति देयम् अदृष्टादिवारणायासाधारणपदं तच्च तन्मात्रनिष्ठकार्यतानिरूपितकारणताश्रयत्वम्। यद्यपि प्रतियोगिनिर्विघ्नेपि गतं तद्ध्वंसे तत्त्वेन हेतुत्वात् तथापि तदन्यत्वमपि देयम्, अत एव प्रतिबन्धकान्यस्य सत इति द्रव्यप्रकाशे

---

**नापि प्रारप्सितेति।** नन्विदं विनायकस्तवपाठेऽतिप्रसक्तं स च न मङ्गलं विनायकस्तवस्यैव मङ्गलत्वात् तस्य च विघ्ननाशकता "सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः" इति स्मृतेरत आह—**विघ्नोत्सारणेति।** विघ्नः—मङ्गलनाश्यतावच्छेदकवैजात्याश्रयो दुरितं तेन न विनायकस्तवपाठादावतिप्रसङ्ग इति भावः।

**विशिष्यापरिचये**—निरुक्तधर्मप्रकारेण पूर्वं ज्ञानाभावे।

**प्रवृत्तिविषयालाभात्, नापि निर्विघ्नं समाप्यतामिति**

प्रगल्भी ।

कारीर्यामतिव्याप्तिरिति वाच्यम् । प्रारिप्सितपदेन विघ्नाश्रयप्रारिप्सितस्योक्तत्वात् । तदधिष्ठाता च पुरुषो न विघ्नवान् । ननु विघ्ननिश्चये सति विघ्ननाशार्थं क्रियमाणे प्रायश्चितादौ अतिव्याप्तिरिति चेत् न विघ्नध्वंसमात्रनिष्ठधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं हि तत्त्वम् । प्रायश्चित्ते तु नैतत् रूपं तस्य विघ्नभिन्नपापध्वंसेऽपि योग्यत्वात् कारीर्यां च नातिप्रसङ्गः । प्रारिप्सितपदोपादानात् । ननु विघ्नरूपप्रतिबन्धके स्वध्वंसासाधारणकारणेऽतिव्याप्तिरिति चेन्न । ध्वंसत्वावच्छिन्नकार्यतानिरूपितकारणतायाः प्रतियोगित्वेनानवच्छेदात् विघ्नध्वंसं प्रत्यसाधारणकारणत्वाभावात् । यदि तत्तद्विघ्नध्वंसादिकं प्रति तत्तत्प्रतियोगित्वेन कारणतेति पक्षः तदा प्रतिबन्धकान्यत्वे सतीति बोध्यम् । निर्विघ्नमिति । तथा चाचारादेव तद्विषयस्य विशिष्य ज्ञानात् विशिष्य प्रवृत्तिविषयलाभ इति भावः ।

आलोककण्टकोद्धारः ।

विशेषणम् । ननु प्रायश्चित्तादावतिव्याप्तिः न हि न तस्य तादृशविघ्ननाशकत्वं मानाभावादग्रिमाकरविरोधाच्च । न च तस्योक्तभिन्नपापेपि नाशकत्वान्नासाधारण्यं प्रायश्चित्तभेदस्य विजातीयविघ्ननाशकतया तत्र चैकव्यक्तेः प्रतिबन्धकत्वे तज्जातीयसर्वव्यक्तेः तज्जातीयक्रियाप्रतिबन्धकत्वादिति चेत् न, तदन्यत्वेनापि विशेषणात् असाधारणपदप्रक्षेपक्रियापदाप्रक्षेपाभ्यां च पूर्वस्माद् भेद इति ध्येयम् । तज्जनकतया यागादाविति-दर्शादिशरीरसम्पादकाग्नेयादावित्यर्थः । वस्तुतोऽतद्गुणबहुव्रीहिणा दुरितध्वंसगङ्गास्नानादावित्यर्थः । कर्मनिर्वाहकत्वस्य

कामनया शिष्टाचारविषयत्वम् वेदस्याचारानुपजीवकत्वात्, वेदादाद्याचारानुपपत्तेश्च अन्योन्याश्रयात्, नापि तत्कामनया वेदविहितत्वम् प्रारिप्सितकर्म्मनिर्व्वाह-

प्रगल्भी ।

ननु अस्मदादीन्प्रति भवत्येव प्राचामाचारमुपजीव्य वेदप्रवृत्तिरत आह—वेदादिति । वेदे प्रवृत्ते ततो मन्वाद्याचारः तदाचारविषयतया सिद्धं मङ्गलत्वमादाय वेदप्रवृत्तिरित्यन्योन्याश्रय इति भावः । यत्तु मङ्गलमाचरेदितिश्रुतावाचरेदिति प्रकृत्यर्थापरिचये आद्याचारानुपपत्तिरित्याचारस्वरूपस्य कथञ्चिदीश्वरेण व्युत्पादनं यदि तदा मङ्गलपदार्थेऽपि तथैवातः क्वान्योन्याश्रय इति तन्न आचारस्यान्यतोऽपि ज्ञानसम्भवात् । मङ्गलाचारस्य च लाघवाद्बोधको वेद एवेति न किञ्चिदेतत् । तत्कामनयेति । निर्विघ्नं समाप्यतामिति कामनयेत्यर्थः । प्रारिप्सितेति । आरम्भणीयाव्यावृत्त्यर्थं मत्यन्तम् ।

आलोकः ।

प्रारिप्सितेति । तत्कालविहितत्वं—तत्कालकर्तव्यत्वेन

आलोकदर्पणः ।

तत्कामनयेति मूलम् । निर्विघ्नं समाप्यतामिति कामनावत्कर्त्त-

आलोककण्टकोद्धारः ।

प्रतिबन्धकनाशकत्वार्थत्वात्, अत्र लिखनादिप्राक् क्रियमाणपत्रमर्दनादिवारणार्थं विहितपदमिति स्फुटत्वान्नोक्तम् । वैदिकपदसत्त्वे तु बोधितत्वमात्रार्थकन्तदित्यवधेयम् ।

---

वेदस्याचारानुपजीवकत्वादिति—वेदो हि स्मृत्याचारयोरुपजीव्यः न तु स्मृत्याचारयोरुपजीवकः वेदमुपजीव्यैव स्मृत्याचारयोः प्रामाण्यस्य मीमांसायां

कत्वे सति कर्म्मारम्भकाले विहितवैदिककर्मत्वं वा तादृशवेदान्तराभावात्, नापि स्मृत्यादौ मङ्गलत्वेनोत्कीर्तितत्वम् वेदस्य स्मृत्यनुपजीवकत्वात्, स्मृतिकर्तुरेव वेदादाद्याचारानुपपत्तेश्च । अत्रोच्यते मङ्गलमाचरेदिति

प्रगल्भी ।

तादृशेति । मङ्गलत्वानुपजीविवेदान्तराभावात् । भावे वा स एवास्तु व्यर्थाधिकवेदकल्पना । एतद्वेदेन च विधाने आत्माश्रय इति भावः । किन्तु निर्विघ्नमित्यादि । इदं तु सम्प्रदायसिद्धं मङ्गलस्य समाप्तिफ-

आलोकः ।

विहितत्वं, तावन्मात्रमारम्भणीयादौ गतमतः कर्मनिर्वाहकत्वम् तावन्मात्रं तज्जनकयागादौ गतमतस्तत्कालेति । प्रयाजादिवारणाय कर्मपदम् । तस्य फलवत्परत्वादिति । आरम्भपदं स्वकालकर्त-

आलोकदर्पणः ।

व्यत्वेनेत्यर्थः । अन्यथा विधौ कामनाया हेतुत्वप्रकारत्वयोरभावात्तृतीयानुपपत्तेः । उक्तार्थं तु प्रकारे तृतीयेति । कर्मारम्भकालविहितत्वस्यार्थमाह तत्कालेति । कर्मारम्भकालकर्त्तव्यत्वेन प्रमापितत्वमित्यर्थः । तज्जनकयागादाविति । स्वस्य स्वनिर्वाहकत्वादिति भावः । प्रयाजादीति । व्रीह्यवघातादीत्यर्थः । प्रयाजादेः स्वरूपानिर्वाहकत्वात्फलवन्निर्वाहकत्वं वा विवक्षितम् । लौकिकव्यापारवारणाय वैदिकपदम् । यत्कर्मप्राक्कालकर्त्तव्यत्वेन विहितत्वं तस्यैव कर्मणो निर्वाहकत्वलाभाय प्रारिप्सितपदम् । अन्यथा आरम्भणीयादावतिव्याप्तेरिति द्रष्टव्यम् । ननु कामनयेति तृतीया न सङ्गता विधौ कामनाया

स्थापनादिति भावः । वेदादाद्येति । वेदाद्बोधमुपजीव्य हि आचारः आचाराच्च शक्तिग्रहपूर्वको वेदाद्बोध इत्यन्योन्याश्रय इत्यर्थः ।

न विधिः किन्तु निर्विघ्नसमाप्तिकामो देवतास्तुतिमाचरेदित्यादिप्रत्येकमेव विधिः तथैव शिष्टाचारात्।

प्रगल्भी।

लकत्वमभिसन्धायोक्तम्। स्वमते तु प्रारिप्सितसमाप्तिप्रतिबन्धकविघ्नध्वंसकामो देवतास्तुतिमाचरेदित्यादिकमेव वाक्यमुन्नेयमिति ध्वनितम्। नच विघ्नध्वंसे वैजात्याभावात्कथमनुगतनमस्कारश्रुत्यादीनां कारणता स्यादिति वाच्यम्। प्रतियोगिविशेषितेषु तत्तद्विघ्नध्वंसेषु प्रत्येकं नमस्कारत्वादिना तेषां कारणत्वात्। तथैव शिष्टाचारादिति। निर्विघ्नमारब्धसमाप्तिकामो देवतां स्तौमीत्येव शिष्टाचारादित्यर्थः।

आलोकः।

व्यत्वेन स्वस्यापि वेदबोध्यत्वादतिव्याप्तिवारणाय। प्रत्येकमेव विधिरिति। नन्वेवमनुगतहेतुतावच्छेदकाभावे विघ्नध्वंसं प्रति कारणत्वासंभवः। कार्ये चावान्तरभेदो नास्त्येव येनाननुगतस्यैव कारणत्वमिति। अत्राहुः। नतिनाश्यविघ्नजातीयो विघ्नो न नुत्यादिनाश्य इति तज्जातीयनाशत्वमेव कार्यतावच्छेदकं नतित्वादिकं हेतुत्वावच्छेदकम्। वस्तुत उक्तरीत्या कार्यकारणभावमात्रे शब्दसामर्थ्यमवच्छेदककल्पना चोत्तरकालिकी तथा च विघ्नध्वंसत्वेन कार्यता विघ्ननाशकत्वेन वेदविहितत्वमेव

आलोककण्टकोद्धारः।

नन्वेवं सर्वजातीयविघ्नसंदेहादेकजातीयमङ्गलानुष्ठानमनुपपन्नमित्यरुचेराह–वस्तुत इति। विघ्नध्वंसत्वेति। अत्र भोगाजन्यत्वं ध्वंसविशेषणम्, यत्तु सुवर्णदानाद्यजन्यत्वं विशेषणमिति–तन्न–तेषां सामान्यतस्तथाविधानात् अन्यथा तद्धेतुत्वानुपपत्तेः प्रमाणान्तराभावात्। नचैवं मङ्गलव्यवहारापत्तिः विघ्नध्वंसत्वेन रूपेण

तदुपजीव्य निर्विघ्नमारब्धं परिसमाप्यतामिति कामनया तद्विघ्नोपशमहेतुत्वेन वा वेदविहितत्वं मङ्गलत्वमित्यधिगम्य देवतास्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानामिति। अत एव दुरितनाशकमपि गङ्गास्नानादि

प्रगल्भी।

उक्ततृतीयार्थप्रकारस्य व्यवच्छेद्यमाह—अत एवेति। स्नातस्य सलिले यस्या इत्यादिना विघ्नध्वंसत्वापुरस्कारेण पापनाशकत्वश्रुतेरित्यर्थः। नन्वादर्शदर्शनादिकमपि मङ्गलं नतु विघ्नोपशमहेतुत्वमित्यव्याप्तिरत आह—मङ्गलेति। पृथक् पारिभाषिकमित्यर्थः। 'ननु मङ्गलाचारयुक्तानां विनिपातो न विद्यते' इतिस्मृतेर्विनिपातपदस्य तत्रविघ्नार्थकत्वात् विघ्नध्वंसहेतुत्वेनादर्शदर्शनादेरुक्तरूपमङ्गलत्वमस्त्येवेतिचेन्न विघ्नार्थकत्वे

आलोकः।

हेतुतावच्छेदकमित्येवोचितम्। अपूर्वजनकतायां कालान्तरीयकार्यानुगुणतया वेदविहितत्ववदिति सारम्। कामनया—कामि-

आलोकदर्पणः।

हेतुत्वाभावात् प्रकारत्वाभावाच्चेत्यत आह—कामिकर्त्तव्यत्वेनेति।

आलोककण्टकोद्धारः।

तमुद्दिश्यविधानस्य ततप्रयोजकत्वमित्यस्य मूलग्रन्थार्थत्वात्, अत्रैवं सत्येकस्मिन् मङ्गले कृते कस्य नाशोऽस्त्वित्यत्र विनिगमकं प्रागुक्तम् परन्तु वैदिके कारणतावच्छेदककल्पनं न क्वचिद्दृष्टमित्यत्रास्वरसबीजं द्रष्टव्यं तथापि तदुच्चारणेति अत्र ॐकारश्चेत्यादिस्मृतिपर्य्यालोचनविरोधात्, सर्वत्राथशब्दस्यानन्तर्यार्थत्वेन ग्रन्थान्तर्भावावश्यकत्वाच्च द्वयमिदमापाततः।वस्तुतोऽथशब्दानन्तरक्रियाकलापे तस्य हेतुत्वमिति ध्येयम्। यद्यप्यथशब्दस्यार्थपरत्वेन विघ्नध्वंसादिकामना

न मङ्गलम् तथाऽविधानात् । "मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम् । जपतां जुह्वताञ्चैव विनिपातो न विद्यते ॥" इत्यनेन बोधितादर्शदर्शनादेः पृथगेव मङ्गलत्वं न तु विघ्ननिवर्तकतया तत्र नानार्थतैव । अन्यथा ग्रन्थारम्भे

प्रगल्भी ।

लक्षणापत्तेर्वाक्यभेदापत्तेश्चेति बोध्यम् । शिष्टानां विघ्नध्वंसकामनया तदनाचरणात्पारिभाषिकमेव मङ्गलत्वं तत्रेत्याहुः । ग्रन्थारम्भ इति । यद्यपि ओंकाराथशब्दयोर्मङ्गलत्वेऽपि गमनाद्यारम्भसमयेऽननुष्ठानवत् ग्रन्थाद्यारम्भसमये तदननुष्ठानेऽपि न क्षतिः तथापि क्वचिदपि आरम्भसमये तस्य नानुष्ठानम् । अथशब्दादौ तु क्वचिदनुष्ठानमिति विशेषः ।

आलोकः ।

कर्तव्यत्वेन न तु विघ्ननिवर्तकतयेति । जुह्वतामिति । न होमान्तरविधिर्वाक्यभेदापत्तेः, रूपालाभाच्च, किन्त्वनुवादः । न च विधिमन्तरा स इति विनिपाताभावफलकप्राप्तहोमजिज्ञासायां नित्यताबलात् प्राप्तपापानुत्पादफलस्याग्निहोत्रस्यैवायमनुवाद इति निश्चीयते । तथा च नञ्पदस्य तदनुरोधेन प्रागभावपरस्य ध्वंसपरत्वे वाक्यभेदापत्तिः । तत्साहचर्यात्प्रागभावपरत्वे स्पष्टमुक्तं पृथगेवेति । यदि चाग्निहोत्रस्यापि मानान्तरात्पापक्षयजनकत्वं ज्ञायते तदापि वाक्यभेदोऽग्निहोत्रानुरोधेन विनिपातपदस्य पापसामान्यपरत्वात्

आलोकदर्पणः ।

अत्राभिप्रायः पूर्वमुक्तः तथा च प्रकारे तृतीयेति भावः । वाक्यभेदेति । अन्यतः प्राप्तजपाद्यनुवादे होमस्य वाऽपूर्वस्य विधाने विध्यनुवादवैरूप्यापत्तेरित्यर्थः । रूपालाभादिति । द्रव्यदेवतयोरप्राप्तेरित्यर्थः ।

